त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ।
सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनात् ॥ ३० ॥
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ।
सद्यस्तान् वमनं तस्मात्पाययेन्मतिमान् मृदु ॥ ३१ ॥
स्तन्यस्य तृप्तं वामयेत् क्षीर-क्षीरान्न-सेविनम् ॥ ३२ ॥
पीतवन्तं तनुं पेयामन्नादं घृतसंयुताम् ॥ ३३ ॥
बस्तिं साध्ये विरेकेन मर्शेन प्रतिमर्शनम् ।
युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ॥ ३४ ॥
मूर्वा-व्योष-वरा-कोल-जम्बूत्वग्-दारु-सर्षपाः
सपाठा मधुना लीढाः स्तन्यदोषहराः परम् ॥ ३५ ॥
दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ।
पिप्पल्या धातकीपुष्प-धात्रीफलकृतेन वा ॥ ३६ ॥
लाव-तित्तिर-वल्लूर-रजः पुष्परसप्लुतम् ।
द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ॥ ३७ ॥

---

त इति । यद्यस्मात्त एव वातादयो दोषास्त एव रसादयो दूष्या ज्वरादयश्च रोगाः पूर्वोक्तास्त एव तस्मादेव पूर्वोक्तं भैषज्यं । अस्य तु बालस्य मात्रा कनीयसी । कुतोऽस्य न्यूनतरा मात्रेत्याह । सौकुमार्येत्यादि ॥ ३० ॥

स्निग्धा इति । शिशवः सर्वदैव स्निग्धाः कुतो घृतक्षीरनिषेवणात् । यतश्चैवं तस्मात् तान् बालान् सद्यो वमनं मृदु धीमान् पाययेत् ॥ ३१ ॥

स्तन्यस्येति । क्षीरसेविनं तथा क्षीरान्नसेविनं बालं स्तन्यस्य तृप्तं सन्तं वामयेत् । स्तन्यस्य तृप्तमित्यधिकरणवाचिनश्चेति षष्ठी । वामयेदिति ग्लास्नावनुवमाञ्चेति मित्त्व-विकल्पः ॥ ३२ ॥

पीतवन्तमिति । अन्नादं बालं तनुमघनां पेयां ससर्पिष्कां पीतवन्तं वामयेत् ॥ ३३ ॥

बस्तिमिति । विरेकेण साध्ये रोगे बस्तिं युञ्ज्यात् । मर्शेन साध्ये रोगे प्रतिमर्शं युञ्ज्यात् । विरेचनादीन् पुनर्यथोदितान् धात्र्या एव युञ्ज्यात् ॥ ३४ ॥

मूर्व्वेति । मूर्वादयो मधुना लीढाः सुष्ठु स्तन्यदोषहराः ॥ ३५ ॥

दन्तपालीमिति । शिशोर्दन्तपालीं पिप्पल्याश्चूर्णेन समाक्षिकेण प्रतिसारयेत् । अथवा धातकीपुष्पादिकृतेन चूर्णेन प्रतिसारयेत् ॥ ३६ ॥

लावेति । लावादिचूर्णं माक्षिकेन द्रवीकृतमुपयुक्तं शिशूनां शीघ्रं दन्तकेसरवन् मुखं करोति । दन्ता एव केसरं तद्विद्यते यस्मिन्निति मतुप् ॥ ३७ ॥

वचा-द्विबृहती-पाठा-कटुकातिविषा-घनैः।
मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ॥ ३८ ॥
रजनी-दारु-सरल-श्रेयसी-बृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ ३९ ॥
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम्।
अतीसार-ज्वर-श्वास-कामला-पाण्डु-कास-नुत्।
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ४० ॥
समङ्गा-धातकी-रोध्र-कुटन्नट-बलाह्वयैः।
महासहा-क्षुद्रसहा-क्षुद्रबिल्वशलाटुभिः ॥ ४१ ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम्।
क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान्।
विविधानामयानेतद् वृद्धकाश्यपनिर्मितम् ॥ ४२ ॥
दन्तोद्भवेषु रोगेषु न बालमतियन्त्रयेत्।
स्वयमप्युपशाम्यन्ति जातदन्तस्य तद्गदाः ॥ ४३ ॥
अत्यहःस्वप्न-शीताम्बु-श्लैष्मिकस्तन्य-सेविनः।
शिशोः कफेन रुद्धेषु स्रोतःसु रसवाहिषु ॥ ४४ ॥
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते।
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ॥ ४५ ॥

---

वचेति। वचादिभिः पक्वं घृतं दन्तोत्थाने सिद्धमव्याहतशक्तित्वात् ॥ ३८ ॥

रजनीति। रजन्यादिचूर्णं माक्षिकयुक्तेन सर्पिषा लीढं ग्रहण्या दीपनं सुष्ठु, वातस्य चानुलोमनम्, तथा अतीसारादिजिद्। बालस्य सर्वामयेषु हितं बलवर्णदञ्च ॥३९-४०॥

समङ्गेति। समङ्गादिभिः सामान्यपरिभाषया तोये साधितं घृतं क्षीरमस्तुयुतं पक्वं दन्तोत्थान् रोगान् अनेकप्रकारान् हन्ति। एतच्च वृद्धकाश्यपेन निर्म्मितम् ॥ ४१-४२॥

दन्तोद्भवेष्विति। दन्तोद्भवेषु रोगेषु बालं नातीव यन्त्रयेत्। पथ्यभोजनादिना नातीव नियमयेत्, यथान्यरोगिणं। किमित्याह,—यद् यस्माद् स्वयमेव चिकित्सामन्तरेणापि जातदन्तस्य सतो बालस्य रोगाः प्रशाम्यन्ति ॥ ४३ ॥

अत्यहरिति। भृशं दिवास्वप्नादिसेविनोऽर्भकस्य कफेन रसवाहिषु स्रोतःसु रुद्धेषु सत्सु अरोचकादयः प्रादुर्भवन्ति। ततस्तेषु जातेषु कुमारः शुष्यति। स्निग्धं शुक्लं वदनं नयनं च यस्य स एवम्भूतः सन् ॥ ४४—४५ ॥

सैन्धव-व्योष-शार्ङ्गेष्टा-पाठा-गिरिकन्दम्बकान् ।
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ॥ ४६ ॥
अशोक-रोहिणीयुक्तं पञ्चकोलञ्च चूर्णितम् ।
बदरी-धातकी-धात्री-चूर्णं वा सर्पिषा प्लुतम् ॥ ४७ ॥
स्थिरा-वचा-द्विबृहती-काकोली-पिप्पली-नतैः ।
निचुलोत्पल-वर्षाभू-भार्गी-मुस्तैश्च कार्षिकैः ।
सिद्धं प्रस्थार्द्धमाज्यस्य स्रोतसां शोधनं परम् ॥ ४८ ॥
सिंह्यश्वगन्धा-सुरसा-कणागर्भञ्च तद्गुणम् ॥ ४९ ॥
यष्ट्याह्व-पिप्पली-रोध्र-पद्मकोत्पल-चन्दनैः ।
तालीश-सारिवाभ्याञ्च साधितं शोषजिद्घृतम् ॥ ५० ॥
शृङ्गी-मधूलिका-भार्गी-पिप्पली-देवदारुभिः ।
अश्वगन्धा-द्विकाकोली-रास्नर्षभक-जीवकैः ॥ ५१ ॥
सूर्पपर्णी-विड़ङ्गैश्च कल्कितैः साधितं घृतम् ।
शशोत्तमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत् परम् ॥ ५२ ॥
वचा-वयस्था-तगर-कायस्था-चोरकैः शृतम् ।
बस्तमूत्रसुराभ्याञ्च तैलमभ्यञ्जने हितम् ॥ ५३ ॥
लाक्षारससमं तैलप्रस्थं मस्तु चतुर्गुणम् ।
अश्वगन्धा-निशा-दारु-कौन्ति-कुष्ठाब्द-चन्दनैः ॥ ५४ ॥
समूर्वा-रोहिणी-रास्ना-शताह्वा-मधुकैः समैः ।
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिदम् ॥ ५५ ॥

---

सैन्धवेति । तस्य अरोचकादिषु सैन्धवादीन् समधुघृतान् योजयेत् ॥ ४६ ॥
अशोकेति । तथा पञ्चकोलं रजीकृतमशोककटुकाभ्यां युक्तं योजयेत्, अथवा बदर्यादिचूर्णं सर्पिषा द्रवीकृतं योजयेत् ॥ ४७ ॥
स्थिरेति । स्थिरादिभिः कार्षिकैश्च घृतस्य प्रस्थार्द्धं सिद्धं परं स्रोतसां विशोधनम् ॥४८॥
सिंह्यश्वगन्धेति । सिंह्यादिभिर्घृतं पूर्वगुणं ॥ ४९ ॥
यष्ट्याह्वेति । मधुयष्टिकादिभिः साधितं सर्पिः शोषजित् ॥ ५० ॥
शृङ्गीति । शृङ्ग्यादिभिः कल्कितैः शशस्य शिरःक्वाथेन साधितं शुष्यतो बालस्यातिपुष्टिकरं ॥ ५१—५२ ॥
वचेति । वचादिभिश्छागमूत्रसुराभ्याञ्च सिद्धं तैलमभ्यञ्जने हितम् ॥ ५३ ॥
लाक्षेति । लाक्षारसतुल्यं तैलप्रस्थ मस्तुचतुर्गुणमश्वगन्धादिभिः सामान्यपरिभाषोक्त-

बल्यं ज्वरक्षयोन्मादश्वासापस्मारवातनुत्।
यक्षराक्षसभूतघ्नं गर्भिणीनाञ्च शस्यते ॥ ५६ ॥
मधुनातिविषा-शृङ्गी * पिप्पलीर्लेहयेच्छिशुम्।
एकां वाऽतिविषां कासज्वरच्छर्दिरुपद्रुतम् ॥ ५७ ॥
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ ५८ ॥
पिप्पलीपञ्चलवणं कृमिजित् पारिभद्रकम्।
तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम्।
लाभतः शल्यकश्वाविद्गोधर्क्षशिखिजन्मनाम् ॥ ५९ ॥
खदिराऽर्जुन-तालीश-कुष्ठ-चन्दनजे रसे।
सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥ ६० ॥
सदन्तो जायते यस्तु दन्ताः प्राग् यस्य चोत्तराः।
कुर्वीत तस्मिन्नुत्पाते शान्तिकञ्च द्विजातये।
दद्यात् सदक्षिणं बालं नैगमेषञ्च पूजयेत् * ॥ ६१ ॥

---

* भार्गीति वा पाठः।

† "हनुमूलगतो वायुर्दन्तदेशास्थिगोचरः। यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति तदा द्विजाः ॥
दन्ताशिनो वातिकस्य चालयत्यनिलः शिराः। हन्वाश्रयाःप्रसुप्तस्य दन्तैःशब्दं करोत्यतः ॥
इत्यधिकः पाठो दृश्यते क्वचित् ॥

---

प्रमाणैः सिद्धं लाक्षादिसंज्ञमेतत्तैलमभ्यङ्गाद् बल्यं ज्वरादिजित् यक्षादिघ्नं गर्भिणीभ्यश्च हितम् ॥ ५४—५६ ॥

मधुनेति। अतिविषादीन् मधुना कासादिपीड़ितं शिशुं बालं लेहयेत्, अथवा अतिविषामेकां लेहयेत् ॥ ५७ ॥

पीतमिति। पिप्पल्यादिकं तद्वत् पूर्ववत् मधुसर्पिषा आलोड्य लिह्यात्। व्योषं तथा मधुसर्पिषा लिह्यात्। शल्यकादिजन्मनां रोम्णां चर्म्मणाञ्च यथालाभं मषीं मधुघृताभ्यां लिह्यात् ॥ ५८—५९ ॥

खदिरेति। खदिरादिरसे सक्षीरं सर्पिः पक्कमुपयुक्तं वमिं शमयति ॥ ६० ॥

सदन्त इति। यस्तु बालो दन्तैः सह जायते यस्य वा दन्ताः प्रथममुपरिष्टाद् भवन्ति, तस्मिन् तथाविधे उत्पाते उत्पन्ने सति शान्तिञ्च कुर्यात्। तञ्च बालं ब्राह्मणाय सदक्षिसस्वर्णादिकं दद्यात्। नैगमेषञ्च पूजयेत् ॥ ६१ ॥

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ ६२ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् ।
तृडास्यकण्ठाक्षिरुजा ग्रीवादुर्द्धरता वमिः ॥ ६३ ॥
तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ।
तालु तद्वत् कणा-शुण्ठी-गोशकृद्रस-सैन्धवैः ॥ ६४ ॥
शृङ्गवेर-निशा-भृङ्गं कल्कितं वटपल्लवैः ।
बद्ध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ।
रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत् ॥ ६५ ॥
हरीतकी-वचा-कुष्ठकल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ ६६ ॥
मलोपलेपात् स्वेदाद् वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोऽन्तःकण्डूमान् जायते भूर्युपद्रवः ॥ ६७ ॥
केचित्तं मातृकादोषं वदन्त्यन्येऽपि पूतनम् ।
पृष्टारुर्गुदकुन्दृञ्च केचिच्च तमनामिकम् ॥ ६८ ॥

---

तालुमांस इति । कफो मधुराद्यैस्तालुमांसे प्रकुपितस्तालुकण्टकं कुर्यात् । तेन तालुकण्टकेन शिरसि तालुप्रदेशे निम्नता स्यात्, तथा तालुनः पतनं स्तनद्वेषः कृच्छ्रेण स्तनपानं शकृच्च द्रवं स्यात्, तथा तृडाद्याः स्युः ॥ ६२—६३ ॥

तत्रेति । तत्र तालूत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत्, तथैव कणादिभिः प्रतिसारयेत् ॥ ६४ ॥

शृङ्गवेरेति । तथा शुण्ठ्यादिकल्कितं वटपल्लवैर्बद्ध्वा गोशकृता लिप्तं ततः कुकूले स्वेदयेत् । अनन्तरं रसेन च ततः स्रुतेन ताल्वास्यञ्च लिम्पेत्, तथा नेत्रं परिषेचयेत् ॥ ६५ ॥

हरीतकीति । हरीतक्यादिकं माक्षिकयुक्तं स्तन्येन शिशुः पीत्वा तालुकण्टकाद् विमुच्यते ॥ ६६ ॥

मलेति । गुदे रक्तकफोद्भवो, मलोपलेपात् स्वेदाद्वा ताम्रो व्रणः कण्डूमानान्तरो बहूपद्रवो जायते । तथाविधं केचित् मातृदोषं कथयन्ति, अपरे च

तत्र धात्र्या: पय: शोध्यं पित्तश्लेष्महरौषधै: ६९ ॥
घृतशीतञ्च शीताम्बु युक्तमन्तरपानकम् ।
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ॥ ७० ॥
त्रिफला-बदरी-प्लक्षत्वक्-क्वाथ-परिसेचितम् ।
कासीस-रोचना-तुत्थ-मनोह्वाल-रसाञ्जनै: ॥ ७१ ॥
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वाऽवचूर्णयेत् ।
सुश्लक्ष्णैरथवा यष्टी-शङ्ख-सौवीरकाञ्जनै: ॥ ७२ ॥
सारिवा-शङ्खनाभिभ्यामसनस्य त्वचाथवा ।
रागकण्डूत्कटे कुर्याद् रक्तस्रावं जलौकसा ।
सर्व्वञ्च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ७३ ॥
पाठा-वेल्ल-द्विरजनी-मुस्त-भार्गीपुनर्नवै: ।
सबिल्व-त्र्यूषणै: सर्पिर्द्विश्चिकालीयुतै: शृतम् ।
लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवै: ॥ ७४ ॥

---

पूतनसंज्ञमित्याहु:, केचित् प्रष्टारुरिति, केचित् गुदकुन्दमिति, केचिच्च तमनामिकं ब्रुवते ॥ ६७—६८ ॥

तत्रेति । तत्र तस्मिन् अनेकनाम्नि रोगे धात्र्या: चीरं शोधनीयं । कै: ? पित्तश्लेष्महृद्भिरौषधै: ॥ ६९ ॥

घृतशीतमिति । सह चौद्रेण वर्त्तते यत्तत् सक्षौद्रञ्च तत् तार्क्ष्यशैलञ्च तेन युक्तं शीताम्बु । अन्तरञ्च पानकञ्च हितम् । किम्भूतं ? घृतशीतम् । अत्र च शीतमात्रस्य शीतत्वेनैव लब्धत्वाच्छीताम्बु इत्यतिशयार्थम् । एवं हि पित्तोपशान्तिर्भवति । अतएव च तत्सहितस्य कफस्य शमनाय माचिकरसाञ्जनयोगोऽत्र कृत: ; तेन च नवीन व्रणं लेपयेत् । कथम्भूतं व्रणं ? त्रिफलादिक्वाथेन परिषेचितं सन्तं कासीसादिपिष्टैर्वा लेपयेत्: अथवा एतैरेव चूर्णितैर्व्रणमवचूर्णयेत्, अथवा मधुकादिभि: सुपिष्टैरवचूर्णयेत् । सारिवा-शङ्खनाभिभ्यामवचूर्णयेत्, अथवाऽसनत्वचा लिम्पेत् । रागकण्ड्वाधिक्ये जलौकोभिरसृक्स्रावं कुर्य्यात् । जलौकसा जातावित्येकवचनान्तस्य प्रयोगो न दोषाय तथा सम्भवस्य दृष्टत्वात् । सर्वं चिकित्सितं पित्तव्रणतुल्यं गुदकुट्टके शस्यते ॥ ७०—७३ ॥

पाठेति । पाठादिभि: पक्वं घृतं मात्रया लिहन् मृत्तिकोद्भै रामयैर्मुच्यते ॥ ७४॥

व्याधेर्यद् यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।
स्थितो मुहूर्त्तं धौतोऽनुपीतस्तं तं जयेद्गदम् ॥ ७५ ॥

इत्युत्तरस्थाने कौमारतन्त्रे बालामय-प्रतिषेधो नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातो बालग्रहप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना ।
मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः ॥ २ ॥

स्कन्दो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः ।
शकुनिः पूतना शीतपूतना दृष्टिपूतना ।
मुखमण्डलिका तद्वद् रेवती शुष्करेवती ॥ ३ ॥

तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः ॥ ४ ॥

---

व्याधेरिति । यस्य रोगस्य यदौषधमुक्तं तेनैवौषधेन स्तनः प्रलेपितो मुहूर्तमात्रं नाडिकाद्वयं यावद् विधृतः स्तनः पश्चात् पीतस्तं तमनियतं रोगं जयेत् ॥ ७५ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्ग-
सुन्दराख्यायामुत्तरस्थाने बालामयप्रतिषेधो नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

अस्मादनन्तरं बालग्रहप्रतिषेध उच्यते। ग्रहाणामपि रोगहेतुत्वात् । अथात इति । बालानां ग्रहास्तेषां प्रतिषेधो यस्मिन् स बालग्रहप्रतिषेधस्तं । शेषं पूर्ववत् ॥ १ ॥

पुरेति । पूर्वं श्रीमहादेवेन कार्त्तिकेयस्य रक्षार्थं मनुष्यशरीराः पञ्च ग्रहा निर्म्मिताः । स्त्रीशरीराश्च सप्तोत्पादिताः ॥ २ ॥

स्कन्द इति । स्कन्दादयः पञ्च नररूपाः । शकुन्यादयः सप्त स्त्रीरूपाः ॥ ३ ॥

तेषामिति । तेषां ग्रहाणां ग्रहीष्यतामभिलष्यमाणानां रूपं प्रततं रोदनं ज्वरश्च ॥४॥

सामान्यं रूपमुत्त्रास-जृम्भाभ्रूक्षेप-दीनताः ।
फेनस्रावोर्द्ध्वदृष्ट्योष्ठ-दन्तदंश-प्रजागराः ॥ ५ ॥
रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम् ।
नखैरकस्मात् परितः स्वधात्रङ्गविलेखनम् ॥ ६ ॥
तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः ।
हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः ॥ ७ ॥
दन्तखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरः ।
वक्रवक्त्रो वमेल्लालां भृशमूर्द्ध्वं निरीक्षते ॥ ८ ॥
वसासृग्गन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ।
चलितैकाक्षिगण्डभ्रूः संरक्तोभयलोचनः ।
स्कन्दार्त्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम् ॥ ९ ॥
संज्ञानाशो मुहुः केशलुञ्चनं कन्धरानतिः ।
विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ॥ १० ॥
फेनोद्वमन-मूर्द्धाक्षि-हस्त-भ्रू-पाद-नर्त्तनम् ।
स्तनस्वजिह्वासन्दंश-संरम्भ-ज्वर-जागराः ।
पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम् ॥ ११ ॥
आध्मानं पाणिपादास्यस्पन्दनं फेननिर्गमः ।
तृण्मुष्टिबन्धातीसार-स्वरदैन्य-विवर्णताः ॥ १२ ॥
कूजनं स्तननं छर्दिः कास-हिक्का-प्रजागराः ।
ओष्ठदंशाङ्गसङ्कोचस्तम्भबस्तामगन्धताः ॥ १३ ॥
ऊर्द्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ।
मूर्च्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ १४ ॥

---

सामान्यमिति । तेषां सामान्यं रूपमुत्त्रास इत्यादि स्वधात्रङ्गविलेखनान्तम् ॥५-६॥

तत्रेति । तत्र तेषु ग्रहेषु मध्ये एकलोचनः स्रवणशीलस्तथा शिरो विक्षिपत इत्यादिसंरक्तलोचनद्वयान्तं स्कन्दगृहीतस्य लक्षणं । तेन वैकल्यं पङ्गुत्वकाणत्वादि मृत्युरेव वा ध्रुवं निश्चितं भवेत् ॥ ९ ॥

सम्प्रति विशाखस्य स्कन्दापस्मारापरसंज्ञस्य लक्षणमाह,—संज्ञानाश इति । संज्ञानाशादिकं पूयशोणितगन्धान्तं स्कन्दापस्मारलक्षणम् ॥ १०—११ ॥

आध्मानमिति । मेषस्य नैगमेषापरसंज्ञस्य आध्मानाद्येकनेत्रशोफान्तं लक्षणम् ॥१२-१४॥

कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।
बहिरायामनं जिह्वादंशोऽन्तः कण्ठकूजनम् ।
धावनं विट्सगन्धत्वं क्रोशनं श्वानवच्छुनि ॥ १५ ॥
रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ।
कासातिसार-वमथु-जृम्भा-तृट्-शवगन्धताः ॥ १६ ॥
अङ्गेष्वाक्षेपविक्षेप-शोष-स्तम्भ-विवर्णताः ।
मुष्टिबन्धः स्रुतिश्चाक्ष्णो बालस्य स्युः पितृग्रहे ॥ १७ ॥
स्रस्ताङ्गत्वमतीसारो जिह्वातालुगले व्रणाः ।
स्फोटाः सदाहरुक्पाकाः सन्धिषु स्युः पुनः पुनः ॥१८॥
निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपि वा ।
भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे ॥ १९ ॥
पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ।
हिक्काध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ।
स्रस्तहृष्टाङ्गरोमत्वं काकवत् पूतिगन्धता ॥ २० ॥
शीतपूतनया कम्पो रोदनं तिर्यगीक्षणम् ।
तृष्णान्त्रकूजोऽतीसारो वसावद् विस्रगन्धता ।
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ॥ २१ ॥
अन्धपूतनया छर्दिर्ज्वरः कासोऽल्पवह्निता * ।
वर्चसो भेद-वैवर्ण्य-दौर्गन्ध्यान्यङ्गशोषणम् ॥ २२ ॥

---

* निद्रतेति वा पाठः ।

---

कम्प इति । शुनि श्वग्रहे कम्प इत्यादिकं क्रोशनं श्वानवदित्यन्तं लक्षणम् ॥ १५ ॥ रोमहर्ष इति । पितृग्रहे रोमहर्ष इत्यादिकं बालस्य स्युरित्यन्तं लक्षणम् ॥१६-१७॥ स्रस्ताङ्गत्वमिति । शकुनिग्रहे स्रस्ताङ्गत्वमित्यादिकं ज्वरश्चेत्यन्तं लिङ्गम् ॥ १८-१९ ॥ पूतनायामिति । वमिः कम्प इत्यादिकं काकवत् पूतिगन्धतेत्यन्तं पूतनाग्रहे लिङ्गम् ॥२०॥

शीतपूतनयेति । शीतपूतनया कम्पो रोदनमित्यादिकमुष्णत्वमपरस्य चेत्येवमन्तं शीतपूतनाग्रहे लिङ्गम् ॥ २१ ॥

दृष्टिसादोऽतिरुक्कण्डू-पोथकीजन्म-शून्यता:।
हिक्कोद्वेग-स्तनद्वेष-वैवर्ण्यं स्वरतीक्ष्णता।
वेपथुर्मत्स्यगन्धित्वमथवा साम्लगन्धिता॥ २३॥
मुखमण्डितया पाणिपादस्य रमणीयता।
सिराभिरसिताभाभिराचितोदरता ज्वरः।
अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धता॥ २४॥
रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम्।
कास-हिक्काक्षिविक्षेप-वक्रवक्त्रत्वरक्तता:।
बस्तगन्धो ज्वरः शोषः पुरीषं हरितं द्रवम्॥ २५॥
जायते शुष्करेवत्यां क्रमात् सर्वाङ्गसंक्षयः॥ २६॥
केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता।
रोदनं गृध्रगन्धित्वं दीर्घकालानुवर्त्तनम्॥ २७॥
उदरे ग्रन्थयो वृत्ता यस्य नानाविधं शकृत्।
जिह्वाया निम्नता मध्ये श्यावं तालु च तं त्यजेत्॥ २८॥
भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते।
तृष्णागृहीतक्षामाक्षो हन्ति तं शुष्करेवती॥ २९॥
हिंसारत्यर्चनाकाङ्क्षा ग्रहग्रहणकारणम्॥ ३०॥

---

अन्धपूतनयेति। छर्द्यादिकं साम्लगन्धितेति अन्धपूतनाया दृष्टिपूतनापरसंज्ञाया लक्षणम्॥ २२—२३॥

मुखमण्डितयेति। मुखमण्डितायां ग्रहे पाणिपादस्य रमणीयतेत्यादिकं लक्षणम्॥ २४॥

रेवत्यामिति। रेवत्यां रेवतीग्रहे श्यावनीलत्वादि लिङ्गम्। जायत इति। शुष्करेवत्यां क्रमात् सर्वाङ्गसंचय इति लिङ्गम्॥ २५—२६॥

अधुनाऽत्रासाध्यलक्षणं वक्ति,—केशेति। केशशात इत्यादिकं श्यावतालुता चेत्यन्तं बालस्य स्यात्। तन्न चिकित्सेत्॥ २७—२८॥

भुञ्जान इति। भुञ्जानोऽन्नं बहुविधमित्यादिलक्षणं बालं शुष्करेवती हन्ति॥ २९॥

त्रिभिः कारणैर्ग्रहा गृह्णन्तीत्याह,—हिंसेति। हिंसा रतिश्च अर्चना च तासामाकाङ्क्षाऽभिलाषः सा ग्रहाणां ग्रहणे हेतुः॥ ३०॥

तत्र हिंसात्मके बालो महान् वा स्तुतनासिकः।
क्षतजिह्वः क्वणेद् बाढमसुखी साश्रुलोचनः॥ ३१॥
दुर्वर्णो हीनवचनः पूतिगन्धिश्च जायते।
क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते॥ ३२॥
हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथा परम्।
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत्॥ ३३॥
अप्सु मज्जेत् पतेत् कूपे कुर्य्यादन्यच्च तद्विधम्।
तृड्दाहमोहान् पूयस्य छर्दनञ्च प्रवर्त्तयेत्।
रक्तञ्च सर्वमार्गेभ्यो रिष्टोत्पत्तिश्च तं त्यजेत्॥ ३४॥
रहः स्त्री-रति-संलाप-गन्ध-स्रग्-भूषणप्रियः।
हृष्टः शान्तश्च दुःसाध्यो रतिकामेन पीड़ितः॥ ३५॥
दीनः परिमृशेद् वक्त्रं शुष्कोष्ठगलतालुकः।
शङ्कितं वीक्षते रौति ध्यायत्यायाति दीनताम्॥ ३६॥
अन्नमन्नाभिलाषेऽपि दत्तं नाति बुभुक्षते।
गृहीतं बलिकामेन तं विद्यात् सुखसाधनम्॥ ३७॥
हन्तुकामं जयेद् होमैः सिद्धमन्त्रप्रवर्तितैः।
इतरौ तु यथाकामं रतिबल्यादिदानतः॥ ३८॥

---

तत्रेति। तत्र तेषु ग्रहेषु मध्यात् हिंसात्मके ग्रहे सति बालो महान् वा पुरुषः स्तुतनासिकादिर्जायते। तथा क्षामः सन् इदमिदं कुर्य्यात्। तद्विधमात्महननादिक-मन्यदपि कुर्य्यात्। तृट्दाहमोहांस्तथा छर्दनञ्च पूयस्य प्रवर्त्तयेत्, तथा सर्वस्रोतोभ्यो रक्तञ्च प्रवर्त्तयेत्, रिष्टोत्पत्तिञ्च। तं बालं नोपक्रमेत्॥ ३१—३४॥

रह इति। रहः स्त्रीरत्यादिप्रियो हृष्टादिगुणो बालो रतिकामेन ग्रहेण पीड़ितः कृच्छ्रसाध्यः स्यात्॥ ३५॥

सम्प्रति अर्च्चाकामं ब्रूते,-दीन इति। दीनादिगुणः सन् इदमिदं करोति। तमेवंविधं बलिकामेन गृहीतं बालं सुखसाध्यं विद्यात्॥ ३६—३७॥

अधुनैषां चिकित्सितमाह हन्तुकाममिति। जिघांसुं ग्रहं होमादिभिर्जयेत्। ननु हिंसाकामोऽसाध्यस्तं त्यजेदित्युक्तं, तत् कथं तस्य साधनमुक्तम्? ब्रूमः, असाध्यस्यापि चिकित्सा कार्य्यैव। तथा च संग्रहेऽभ्यधायि,—"तस्मादाचरमोच्छ्वासाच्चिकित्सेत्" इत्यादि। अपि च मन्त्रप्रभावस्याचिन्त्यत्वाच्च। इतरौ तु रत्यर्चाकामौ यथाभिलाषं रतिबल्यादिदानेन जयेत्॥ ३८॥

अथ साध्यग्रहं बालं विविक्ते शरणे स्थितम्
त्रिरह्नः सिक्तसंसृष्टे सदा सन्निहितानले ॥ ३९ ॥
विकीर्णभूति-कुसुम-पत्र-बीजान्नसर्षपे।
रक्षोघ्न-तैल-ज्वलित-प्रदीप-हृत-पाप्मनि ॥ ४० ॥
व्यवाय-मद्यपिशित-निवृत्त-परिचारके।
पुराणसर्पिषाऽभ्यक्तं परिषिक्तं सुखाम्बुना ॥ ४१ ॥
साधितेन-बला-निम्ब-वैजयन्ती-नृपद्रुमैः।
पारिभद्रक-कट्वङ्ग-जम्बू-वरुण-कट्फलैः ॥ ४२ ॥
कपोतवङ्काऽपामार्गपाटलामधुशिग्रुभिः।
काकजङ्घा-महाश्वेता-कपित्थ-क्षीरपादपैः ॥ ४३ ॥
सकदम्ब-करञ्जैश्च धूपं स्नातस्य चाऽचरेत्।
द्वीपि-व्याघ्राहि-सिंहर्क्ष-चर्मभिर्घृतमिश्रितैः ॥ ४४ ॥
पूती-दशाङ्गी-सिद्धार्थ-वचा-भल्लात-दीप्यकैः।
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ॥ ४५ ॥
वचा-हिङ्गु-विडङ्गानि सैन्धवं गजपिप्पली।
पाठा प्रतिविषा व्योषं दशाङ्गः कश्यपोदितः ॥ ४६ ॥
सर्षपा निम्बपत्राणि मूलमश्वखुरा वचा।
भूर्जपत्रं घृतं धूपः सर्वग्रहनिवारणः ॥ ४७ ॥

---

अथेति। कृतमङ्गलं साध्यग्रहं बालं विविक्ते गृहे स्थितम्। किम्भूते? त्रीन् वारान् शोधिते सिक्ते च। त्रिरह्न इति कृत्वोऽर्थप्रयोगे कालेऽधिकरण इत्यधिकरणे षष्ठी। तथा सर्वदा निकटाग्नौ, तथा विक्षिप्तभूत्यादिके। रक्षोघ्नतैलप्रदीपे प्रदीपहृतपापे, व्यवायादिनिवृत्तपरिचारके। किम्भूतं बालं? पुराणघृताभ्यक्तम्, तथा स्नातमुष्णाम्बुना। किम्भूतेन जलेन? बलादिभिः साधितेन। वैजयन्ती अरणिका। महाश्वेता कटभी। परिषिक्तस्य चाप्यस्य द्वीप्यादिचर्मादिभिर्घृतमिश्रितैर्धूपनं कुर्यात् ॥ ३९—४४ ॥

पूतीति। पूत्यादिभिर्धूपः सर्वग्रहविमोक्षणः स्यात्। पूती पूतीकरञ्जः ॥ ४५ ॥

वचेति। वचादिदशाङ्गः कश्यपेन विनिर्मितः धूपः सर्वग्रहजित् ॥ ४६ ॥

सर्षपेति। सर्षपादिभिर्धूपोऽशेषग्रहनिवारणः। अश्वखुरा गिरिकर्णिका ॥ ४७ ॥

अनन्ताऽम्राऽस्थि-तगरं मरिचं मधुरो गणः ।
शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ।
दशमूलरसक्षीरयुक्तं तद् ग्रहजित् परम् ॥ ४८ ॥
रास्नांशुमती-वृद्ध-पञ्चमूल-वचा-घनात् ।
क्वाथे सर्पिः पचेत् पिष्टैः सारिवा-व्योष-चित्रकैः ॥
पाठा-विड़ङ्ग-मधुक-पयस्या-हिङ्गु-दारुभिः ।
सग्रन्थिकैः सेन्द्रयवैः शिशोस्तत् सततं हितम् ।
सर्वरोगग्रहहरं दीपनं बलवर्णदम् ॥ ४९ ॥
सारिवा-सुरभी-ब्राह्मी-शङ्खिनी-कृष्ण-सर्षपैः ।
वचाऽश्वगन्धा-सुरसा-युक्तैः सर्पिर्विपाचयेत् ।
तन्नाशयेद्ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च ॥ ५० ॥
गोशृङ्ग-लोम * बालाहि-निर्मोक-वृषदंश-विट् ।
निम्बपत्राज्य-कटुका मदनं वृहतीद्वयम् ॥
कार्पासाऽस्थि-यव-च्छाग-रोम † देवाह्व-सर्षपम् ।
मयूरपत्र-श्रीवासं तुषकेशं सरामठम् ॥
मृद्भाण्डे बस्तमूत्रेण भावितं श्लक्ष्णचूर्णितम् ।
धूपनार्थं हितं सर्वभूतेषु विषमे ज्वरे ॥ ५१ ॥

---

* चर्म्म इति वा पाठः ।

† वचाबिल्वलोध्र इति वा पाठः ।

---

अनन्तेति । यवासादिभिः कल्कितैर्दशमूलरसक्षीरयुतं घृतं पिबेत् । तच्च शिशोः पथ्यं । परं ग्रहजित् ॥ ४८ ॥

रास्नेति । रास्नादिक्वाथे सारिवादिभिः कल्कैः सर्पिः पचेत् । तच्च शिशोः सदा पथ्यं सर्वरोगग्रहघ्नं । दीपनं बलवर्णदञ्च ॥ ४९ ॥

सारिवेति । सारिवादिभिः सुरसायुक्तैः सर्पिर्विपाचयेत् । तच्च पानाभ्यञ्जनाभ्यां सर्वग्रहनाशनम् ॥ ५० ॥

गोशृङ्गेति । गोशृङ्गादि सर्पनिर्मोकादि च मृन्मयी भाण्डे छागमूत्रेण भावितं श्लक्ष्णरजीकृतं सर्वभूतेषु विषमज्वरे च धूपनार्थं हितम् ॥ ५१ ॥

घृतानि भूतविद्यायां वक्ष्यन्ते यानि तानि च ।
युञ्ज्यात्तथा बलिं होमं स्नपनं मन्त्रतन्त्रवित् ॥ ५२ ॥
पूतीकरञ्जत्वक्पत्रं चोरिभ्यो बर्बरादपि ।
तुम्बी-विशालारलुका-शमी-बिल्व-कपित्थकाः ।
उत्क्वाथ्य तोयं तद्रात्रौ बालानां स्नपनं शिवम् ॥ ५३ ॥
अनुबन्धान्यथाकृच्छ्रं ग्रहापायेऽप्युपद्रवान् ।
बालामयनिषेधोक्तभेषजैः समुपाचरेत् ॥ ५४ ॥
इत्यष्टाङ्गहृदये कौमारतन्त्रे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥
इति कौमार-तन्त्रम् ।

---

घृतानीति । यानि च सर्पींषि भूतविद्यायां वक्ष्यन्ते तानि च युञ्ज्यात् । तथा मन्त्राः संग्रहोक्ताः । मन्त्राणि च तन्त्राणि च तानि वेत्तीति मन्त्रतन्त्रविद् वैद्यो बलिं होमं स्नपनञ्च युञ्ज्यात् ॥ ५२ ॥

पूतीति । पूतीकरञ्जत्वक्, तथा पत्रं चोरिकात् बर्बरादिभ्यश्च तोयमुत्क्वाथ्य तद्रात्रौ बालानां स्नपनं शिवं स्यात् ॥ ५३ ॥

अनुबन्धेति । अनुबन्धान् यथाकृच्छ्रं तथा ग्रहाणामपायो मोक्षः ये चोपद्रवास्तांश्च बालामयप्रतिषेधाध्यायोक्तैरौषधैः समुपक्रमेत् ॥ ५४ ॥

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्ग-
सुन्दराख्यायामुत्तरस्थाने बालग्रहप्रतिषेधो नाम
तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

अथातो भूतविज्ञानं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
लक्षयेत् ज्ञान-विज्ञान-वाक्-चेष्टा-बल-पौरुषम् ।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ २ ॥
भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः ।
यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत्
सोऽष्टादशविधो देवदानवादिविभेदतः ॥ ३ ॥
हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोऽथवा ।
प्रज्ञापराधः सुतरां तेन कामादिजन्मना ॥ ४ ॥
लुप्तधर्मव्रताचारः पूज्यानप्यतिवर्तते ।
तं तथा भिन्नमर्यादं पापमात्मोपघातिनम् ।
देवादयोऽप्यनुघ्नन्ति ग्रहाश्छिद्रप्रहारिणः ॥ ५ ॥
छिद्रं पापक्रियारम्भः पाकोऽनिष्टस्य कर्मणः ।
एकस्य शून्येऽवस्थानं श्मशानादिषु वा निशि ॥ ६ ॥

---

अधुना भूतविद्याज्ञानाध्यायारम्भो ग्रहसामान्यात् । अथेति । लक्षयेदिति । यत्र पुरुषे ज्ञानाद्यपौरुषं लक्षयेत् तत्र भूतग्रहं वदेत् । इति सामान्यं भूतविज्ञानम् ॥ १-२ ॥

भूतस्येति । यस्य भूतस्य रूपादेरनुकारं यादृशं भजेत् तेन तं पुरुषमधिष्ठितं गृहीतं वदेत् । स भूतोऽष्टादशप्रकारो देवादिभेदेन ॥ ३ ॥

हेतुरिति । तस्य भूतस्यानुषङ्गे प्रज्ञापराधः सद्योऽधुना ततः पूर्वजन्मकृतो वा हेतुः । तेन प्रज्ञापराधेन कामक्रोधादिजेन सुतरां नष्टधर्मव्रताचारः सन् पूज्यानप्यतिक्रामति । तं पुरुषं, तथा लुप्तधर्मव्रताचारत्वाद्द भिन्नमर्यादं देवादयो ग्रहा अपि अत्यन्तमर्यादातिक्रमादनुपश्चाद्द घ्नन्ति । न केवलं हिंसात्मकानां क्षमा इति द्योतनार्थोऽपि शब्दः । कीदृशास्ते ? छिद्रप्रहारिणः । हेतावियं प्रथमा छिद्रप्रहारित्वादित्यर्थः ॥ ४-५॥

छिद्रमिति । छिद्रं पापक्रियारम्भ उच्यते । स चाशुभस्य कर्मणः पाकः फलं । एकस्याऽद्वितीयस्य शून्ये स्थाने वा स्थितिः, अथवा श्मशानादिषु निशि अवस्थितिः ।

दिग्वासस्त्वं गुरोर्निन्दा रतेरविधिसेवनम्।
अशुचेर्दैवतार्चादिपरसूतकसङ्करः॥ ७॥
होममन्त्रबलीज्यानां विगुणं परिकर्म च।
समासाद्दिनचर्यादिप्रोक्ताचारव्यतिक्रमः॥ ८॥
गृह्णन्ति शुक्लप्रतिपत्त्रयोदश्योः सुरा नरम्।
शुक्लत्रयोदशी-कृष्ण-द्वादश्योर्दानवा ग्रहाः॥ ९॥
गन्धर्वास्तु चतुर्दश्यां द्वादश्याञ्चोरगाः पुनः।
पञ्चम्यां शुक्लसप्तम्यामेकादश्यां धनेश्वराः॥ १०॥
शुक्लाष्ट-पञ्चमी-पूर्णमासीषु ब्रह्मराक्षसाः।
कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्वसु॥ ११॥
दशामावास्ययोरष्टनवम्योः पितरोऽपरे।
गुरुवृद्धादयः प्रायः कालं सन्ध्यासु लक्षयेत्॥ १२॥
फुल्लपद्मोपममुखं सौम्यदृष्टिमकोपनम्।
अल्पवाक् स्वेदविण्मूत्रं भोजनानभिलाषिणम्॥ १३॥
देवद्विजातिपरमं शुचिसंस्कृतवादिनम्।
मीलयन्तं चिरान्नेत्रे सुरभिं वरदायिनम्॥ १४॥
शुक्लमाल्याम्बरसरिच्छैलोच्चभवनप्रियम्।
अनिद्रमप्रधृष्यञ्च विद्याद्देववशीकृतम्॥ १५॥

---

तथा नग्नेत्यादि। किंवा बहुनोदितेन, संक्षेपेण दिनचर्यादिकथितस्याचारस्य च व्यतिक्रम इति ग्रहग्रहणे हेतुः॥ ६—८॥

गृह्णन्तीति। देवाः शुक्लप्रतिपदि शुक्लत्रयोदश्याञ्च नरं गृह्णन्ति। शुक्लत्रयोदश्यां कृष्णद्वादश्याञ्च दानवाः। गन्धर्वास्तु चतुर्दश्यां द्वादश्याञ्च। सर्पास्तु पञ्चम्यां। शुक्लपक्षस्य सप्तम्यां एकादश्याञ्च यक्षा गृह्णन्ति। शुक्लाष्टम्यादिषु ब्रह्मराक्षसा गृह्णन्ति। रक्षः-पिशाचादयः कृष्णपक्षे नवमीद्वादश्योः पर्वसु गृह्णन्ति। दशम्यादिषु पितरो गृह्णन्ति। अपरेऽनुक्ता गुरुवृद्धादयोऽष्टमीनवम्योर्गृह्णन्ति। पूर्वोक्तेष्वेव तिथिषु प्रायेण बाहुल्येन ग्रहणकालं सन्ध्यासु पूर्वादिषु जानीयात्॥ ९—१२॥

फुल्लेति। फुल्लपद्मोपममुखमित्यादिं देवग्रहगृहीतं विद्यात्॥ १३—१५॥

जिह्मदृष्टिं दुरात्मानं गुरु-देव-द्विज-द्विषम् ।
निर्भयं मानिनं शूरं क्रोधनं व्यवसायिनम् ॥ १६ ॥
रुद्रः स्कन्दो विशाखोऽहमिन्द्रोऽहमिति वादिनम् ।
सुरामांसरुचिं विद्यात् दैत्यग्रहगृहीतकम् ॥ १७ ॥
स्वाचारं सुरभिं हृष्टं गीतनर्तनकारिणम् ।
स्नानोद्यानरुचिं रक्तवस्त्रमाल्यानुलेपनम् ।
शृङ्गारलीलाभिरतं गन्धर्वाध्युषितं वदेत् ॥ १८ ॥
रक्ताक्षं क्रोधनं स्तब्धदृष्टिं वक्रगतिं चलम् ।
श्वसन्तमनिशं जिह्वालालिनं सृक्कणीलिहम् ॥ १९ ॥
प्रियदुग्धगुडस्नानमधोवदनशायिनम् ।
उरगाधिष्ठितं विद्याच्चस्यन्तञ्चातपत्रतः ॥ २० ॥
विप्लुतं त्रस्तरक्ताक्षं शुभगन्धं सुतेजसम् ।
प्रिय-नृत्य-कथा-गीत-स्नान-माल्यानुलेपनम् ॥ २१ ॥
मत्स्यमांसरुचिं हृष्टं तुष्टं बलिनमव्यथम् ।
चलिताग्रकरं कस्मै किं ददामीति वादिनम् ॥ २२ ॥
रहस्यभाषिणं वैद्यद्विजातिपरिभाविनम् ।
अल्परोषं द्रुतगतिं विद्याद्यक्षगृहीतकम् ॥ २३ ॥
हास्यनृत्यप्रियं रौद्रचेष्टं छिद्रप्रहारिणम् ।
आक्रोशिनं शीघ्रगतिं देव-द्विज-भिषग्-द्विषम् ॥ २४ ॥
आत्मानं काष्ठशस्त्राद्यैर्घ्नन्तं भोःशब्दवादिनम् ।
शास्त्रवेदपठं विद्याद् गृहीतं ब्रह्मराक्षसैः ॥ २५ ॥

---

जिह्मदृष्टिमिति । जिह्मदृष्टिमित्यादिलक्षणलक्षितं दैत्यवशीकृतं विद्यात् ॥१६-१७ ॥
स्वाचारमिति । स्वाचारमित्यादिलक्षणलक्षितं गन्धर्व्वेण गृहीतं विद्यात् ॥ १८ ॥
रक्ताक्षमिति । रक्ताक्षमित्यादिलक्षणं कृच्छ्राच्च त्रसन्तं सर्पाधिष्ठितं विद्यात् ॥ १९-२०॥
विप्लुतमिति । विप्लुतत्रस्तमित्यादिलक्षणं यक्षगृहीतं विद्यात् ॥ २१—२३ ॥
हास्येति । हास्यनृत्यप्रियमित्यादिलक्षणं ब्रह्मराक्षसगृहीतं विद्यात् ॥ २४—२५ ॥

सक्रोधदृष्टिं भृकुटिमुद्वहन्तं ससम्भ्रमम् ।
प्रहरन्तं प्रधावन्तं शब्दन्तं भैरवाननम् ॥ २६ ॥
अन्नाद्विनापि बलिनं नष्टनिद्रं निशाचरम् ।
निर्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ॥ २७ ॥
रोषणं रक्त-माल्य-स्त्री-रक्त-मद्यामिष-प्रियम् ।
दृष्ट्वा च रक्तं मांसं वा लिहानं दशनच्छदौ ।
हसन्तमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥ २८ ॥
अस्वस्थचित्तं नैकत्र तिष्ठन्तं परिधाविनम् ।
उच्छिष्ट-नृत्य-गान्धर्व-हास-मद्यामिष-प्रियम् ॥ २९ ॥
निर्भर्त्सनाद्दीनमुखं रुदन्तमनिमित्ततः ।
नखैर्लिखन्तमात्मानं रूक्षध्वस्तवपुःस्वरम् ॥ ३० ॥
आवेदयन्तं दुःखानि सम्बद्धाबद्धभाषिणम् ।
नष्टस्मृतिं शून्यरतिं लोलं नग्नं मलीमसम् ॥ ३१ ॥
रथ्याचेलपरीधानं तृणमालाविभूषणम् ।
आरोहन्तञ्च काष्ठाश्म तथा सङ्करकूटकम् ॥
बह्वाशिनं पिशाचेन विजानीयादधिष्ठितम् ॥ ३२ ॥
प्रेताकृतिक्रियागन्धं भीतमाहारविद्विषम् ।
तृणच्छिदञ्च प्रेतेन गृहीतं नरमादिशेत् ॥ ३३ ॥
बहुप्रलापं कृष्णास्यं प्रविलम्बितयायिनम् ।
शूनप्रलम्बवृषणं कुष्माण्डाधिष्ठितं वदेत् ॥ ३४ ॥
गृहीत्वा काष्ठलोष्ट्रादि भ्रमन्तं चीरवाससम् ।
नग्नं धावन्तमुच्चस्तदृष्टिं तृणविभूषणम् ॥ ३५ ॥

---

सक्रोधदृष्टिमिति । सक्रोधदृष्टिमित्यादिलक्षणं राक्षसाधिष्ठितं वदेत ॥ २६-२८ ॥
अस्वस्थेति । अस्वस्थचित्तमित्यादिलक्षणं पिशाचगृहीतं विद्यात् ॥ २९—३२ ॥
प्रेतेति । प्रेताकृतिक्रियागन्धमित्यादिलक्षणं प्रेतग्रहगृहीतं नरं विद्यात् ॥ ३३ ॥
बहुप्रलापमिति । बहुप्रलापादिलक्षणं कूष्माण्डाधिष्ठितं वदेत् ॥ ३४ ॥

श्मशानशून्यायतन-रथ्यैकद्रुमसेविनम् ।
तिलान्नमद्यमांसेषु सततं सक्तलोचनम् ।
निषादाधिष्ठितं विद्याद् वदन्तं परुषाणि च ॥ ३६ ॥
याचन्तमुदकं चान्नं त्रस्तालोहितलोचनम् ।
उग्रवाक्यञ्च जानीयान्नरमौकिरणार्दितम् ॥ ३७ ॥
गन्ध-माल्य-रतिं सत्यवादिनं परिवेपिनम् ।
बहुच्छिद्रञ्च जानीयाद् वेतालेन वशीकृतम् ॥ ३८ ॥
अप्रसन्नदृशं दीनवदनं शुष्कतालुकम् ।
चलन्नयनपक्ष्माणं निद्रालुं मन्दपावकम् ॥ ३९ ॥
अपसव्यपरीधानं तिलमांसगुडप्रियम् ।
स्खलद्वाचञ्च जानीयात् पितृग्रहवशीकृतम् ॥ ४० ॥
गुरुवृद्धर्षिसिद्धाभिशापचिन्तानुरूपतः ।
व्याहाराहारचेष्टाभिर्यथास्वं तद्ग्रहं वदेत् ॥ ४१ ॥
कुमारवृन्दानुगतं नग्नमुद्धतमूर्द्धजम् ।
अस्वस्थमनसं दर्घिकालिकं तं ग्रहं त्यजेत् ॥ ४२ ॥

इत्यष्टाङ्गहृदये भूततन्त्रे भूतविज्ञानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

गृहीत्वेति । गृहीत्वा काष्ठमित्यादिलक्षणं, तथा परुषाणि भाषमाणं निषादगृहीतं विद्यात् ॥ ३५—३६ ॥

याचन्तमिति । याचन्तमुदकमित्यादिलक्षणं औकिरणार्दितं वदेत् ॥ ३७ ॥

गन्धेति । गन्धमाल्यरतिमित्यादिलक्षणं वेतालगृहीतं विद्यात् ॥ ३८ ॥

अप्रसन्नेति । अप्रसन्नदृशमित्यादिलक्षणं पितृग्रहगृहीतं विद्यात् ॥ ३९—४० ॥

गुर्व्विति । गुर्व्वादीनां शाप-चिन्तानुरूपवचनादिभिर्यथायोगं तद्ग्रहं विद्यात् ॥ ४१ ॥

कुमारेति । सर्वग्रहगृहीतं त्यजेत् । कीदृशं ? कुमारसमूहेनानुयातं, तथा नग्नमुद्धतकेशं, तथाऽस्वस्थचित्तं, तथा दीर्घकालानुवर्त्तिनञ्च ॥ ४२ ॥

इति मृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने भूतविज्ञानीयो
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो भूतप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः—
तपः-शील-समाधान-ज्ञान-दान-दयादिभिः ॥ १ ॥
हिङ्गु-व्योषाल-नैपाली-लशुनार्कजटाजटाः * ।
अजलोमी सगोलोमी भूतकेशी वचा लता ॥ २ ॥
कुक्कुटी सर्पगन्धाख्या तिलाः कालविषाणिके ।
वज्रप्रोक्ता वयस्था च शृङ्गी मोहनवल्ल्यपि ॥ ३ ॥
स्रोतोजाञ्जनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम् ।
खराश्व-श्वाविदुष्ट्रर्क्ष-गोधा-नकुल-शल्यकान् ॥ ४ ॥
द्वीपि-मार्जार-गो-सिंह-व्याघ्र-सामुद्रसत्वतः ।
चर्म-पित्त-द्विज-नखा वर्गेऽस्मिन् साधयेद्घृतम् ॥ ५ ॥

---

* मयाः इति वा पाठः ।

---

भूतग्रहविज्ञानानन्तरं भूतस्य प्रतिषेधः चिकित्सितमुच्यते । ननु निदानचिकित्सित-पदाभ्यां प्रसिद्धतराभ्यां पूर्ववत् किमितीदं तन्त्रकृता नोपनिबद्धमिति केचिच्चोद्यमचूचु-दंस्तान् सम्वक्ष्महे । शास्त्रकारस्यास्य ईदृशी प्रतिज्ञा सूत्र-शारीर-निदान-चिकित्सित-कल्पोत्तराख्यैः षड्भिः स्थानैस्तन्त्रमिदमभिधेयमिति । तदेवं यद्युत्तरे स्थानेऽपि किञ्चि-न्निदानचिकित्सितपदाभ्यामभिधीयते ततः षट्स्थानकमिदं तन्त्रप्रतिज्ञां व्याहन्यात् । तस्मादयं विरचनाप्रकारविशेषः कृतः । अथात इति । पूर्ववत् व्याख्येयम् । भूतमिति । अहिंसाकामं भूतं जपादिभिर्जयेत् ॥ १ ॥

हिङ्ग्विति । हिङ्ग्वादय औषधं ; आलं हरितालं ; नैपाली कस्तूरी ; जटा जटामांसी ; लता प्रियङ्गुः ; कुक्कुटी शितिवारकः ; सर्पगन्धाख्या नाकुली ; कालविषाणिके काकोलीचीरकाकोल्यौ ; शृङ्गी अतिविषा ; मोहनवल्ली मन्दाकः ; अन्यदपि रक्षोघ्नं गुग्गुल्वादिकमौषधं, तथा गर्दभतुरङ्गादिभ्यश्चर्मादयः । सामुद्रसत्त्वती

पुराणमथवा तैलं नवं तत्पाननस्ययोः ।
अभ्यङ्गे च प्रयोक्तव्यमेषां चूर्णञ्च धूपने ॥ ६ ॥
एभिश्च गुटिकां युञ्ज्यादञ्जने सावपीडने ।
प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ।
प्रयोगोऽयं ग्रहोन्मादान् सापस्मारान् समं नयेत् ॥ ७ ॥
गजाह्वापिप्पलीमूलव्योषामलकसर्षपान् ।
गोधानकुलमार्जारझषपित्तप्रपेषितान् ।
नावनाभ्यङ्गसेकेषु विदधीत ग्रहापहान् ॥ ८ ॥
सिद्धार्थकं-वचा हिङ्गुप्रियङ्गुरजनीद्वयम् ।
मञ्जिष्ठा श्वेतकटभी वचा श्वेताद्रिकर्णिका ॥ ९ ॥
निम्बस्य पत्रं बीजन्तु नक्तमाल-शिरीषयोः ।
सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ १० ॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान्सर्वान्निहंन्त्याशु विशेषादासुरान् ग्रहान् ।
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च ॥ ११ ॥
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ।
पाननस्याञ्जनालेपस्तनोद्वर्षणयोजितः ।
गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ १२ ॥

---

जलधिजन्तीस्तदेतस्मिन् हिङ्ग्वादिवर्गे घृत पुराणमथवा नवं तैलं पचेत् साधयेत् । तच्च घृतं तैलं वा सिद्धं पाने नस्येऽभ्यञ्जने च प्रयोज्यं । एषां द्रव्याणाञ्च चूर्णं धूपने प्रयोज्यं । एभिश्चूर्णैर्गुटिकामञ्जने चावपीडने च युञ्ज्यात् । एषाञ्च द्रव्याणां कल्कं प्रलेपे क्वाथं परिषेचने युञ्ज्यात् । अयं प्रयोगो ग्रहादीन् शमयेत् ॥ २—७ ॥

गजाह्वेति । हस्तिपिप्पल्यादीनि गोधादिपित्तपिष्टानि नस्याभ्यञ्जनसेकेषु ग्रहापहान कुर्य्यात् । मूलं पुष्करमूलं ; झषो जलचरभेदः ॥ ८ ॥

सिद्धार्थकेति । सर्षपादि गोमूत्रे चतुर्गुणे सर्पिः सिद्धं सिद्धार्थकसंज्ञं पाने नस्ये च योजितं सर्वान् ग्रहान् द्राङ् नाशयति । विशेषेणासुरग्रहान् कृत्यादींश्च । श्वेतकटभी श्वेतगुञ्जा । श्वेताद्रिकर्णिका शुक्ला गिरिकर्णिका ॥ ९—११ ॥

एभिरिति । एभिरेव द्रव्यैश्छागमूत्रेण कल्पितोऽगदः पानादिषु योजितः पूर्व्वेण तुल्य उक्तो राजद्वारे च सिद्धिकरः स्यात् ॥ १२ ॥

सिद्धार्थक-व्योष-वचाऽश्वगन्धा-
निशा-द्वयं हिङ्गु-पलाण्डुकन्दम् ।
बीजं करञ्जात् कुसुमं शिरीषात्
फलञ्च वल्कञ्च कपित्थवृक्षात् ॥ १३ ॥

समाणिमन्थं सनतं सकुष्ठं
श्योनाकमूलं किणिही सिता च ।
बस्तस्य मूत्रेण विभावितं तत्
पित्तेन गव्येन गुडान् विदध्यात् ॥ १४ ॥

दुष्टव्रणोन्मादतमोनिशान्धानुद्बद्धकान् वारिनिमग्नदेहान् ।
दिग्धाहतान् दर्पित-सर्पदष्टांस्ते साधयन्त्यञ्जन-नस्य-लेपैः ॥१५॥

कार्पासास्थि-मयूरपिच्छ-बृहती-निर्माल्य-पिण्डीतक-
त्वङ्मांसी * वृष-दंशविट्-तुष-वचा-केशाहिनिर्मोचनैः ।
नागेन्द्रद्विजशृङ्गहिंगुमरिचैस्तुल्यैः कृतं धूपनम्
स्कन्दोन्माद-पिशाच-राक्षस-सुरावेशज्वरघ्नं परम् ॥ १६ ॥

त्रिकटुक-दल-कुङ्कुम-ग्रन्थिक-क्षार-सिंही-
निशा-दारु-सिद्धार्थयुग्माम्बु-शक्राह्वयैः ॥
सितलशुन-फलत्रयोशीर-तिक्ता-वचा-
तुल्य-यष्टी-बला-लोहितैला-शिला-पद्मकैः ॥ १७ ॥

---

* त्वग्वांशीति पाठान्तरम् ।

---

सिद्धार्थकेति । सिद्धार्थकादि वस्तमूत्रेण सुभावितं गव्येन पित्तेन गुडकान् कुर्य्यात् । ते च गुडका अञ्जननस्यलेपैर्दुष्टव्रणादीन्साधयन्ति । उपजातिवृत्तमिन्द्रवज्रा च ॥ १३— १५ ॥

कार्पासेति । कार्पासाऽस्थ्यादिभिः कृतं धूपनं स्कन्दादिघ्नं परं स्यात् । निर्माल्यं महादेवसम्बन्धि । वृषदंशविण् मार्जारविष्ठा । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

त्रिकटुकेति । त्रिकटुकादिभिः कल्कितैर्वृतमशेषमूत्राणां गोमूत्रादीनामंशैर्भागैः सिद्धं भूतरावाह्वसंज्ञं मतम् । तत् पानतः परं ग्रहघ्नं स्यात् । दलं तमालपत्रं । सिद्धार्थयुग्मं पीतकृष्णभेदेन । तुल्यं कर्पारिकातुल्यं । शक्राह्वा इन्द्रयवाः । सितलशुनं

दधि-तगर-मधूकसार-प्रियाह्वाविषाख्या विषा-
तार्च्चप्रशैलैः सचव्यामयैःकल्कितैः।
घृतमनवमशेषमूत्रांशसिद्धम्मतम्
भूतरावाह्वयं पानतस्तद् ग्रहघ्नं परम्॥ १८॥
नत-मधुक-करञ्ज-लाक्षा-पटोली-समङ्गा-वचा-
पाटली-हिंगुसिद्धार्थ-सिंही-निशायुगलतारोहिणी।
बदर-कटु-फलत्रिका-काण्ड दारु-क्रमिघ्नाजगन्धामरा-
ङ्कोल्ल-कोशातकी-शिग्रु,-निम्बाम्बु,देन्द्राह्वयः॥
गदशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुम्भाग्निबिल्वैः समैः
कल्कितैर्मूत्रवर्गेण सिद्धं घृतम्।
विधिविनिहितमाशु सवः क्रमैर्योजितं
हन्ति सर्वग्रहोन्माद-कुष्ठज्वरांस्तन्महाभूतरावं स्मृतम्॥ १६॥
ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः।
दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः॥ २०॥
स्नान-वस्त्र-वसा-मांस-मद्य-क्षीर-गुडादि च।
रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा॥ २१॥
रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम्॥ २२॥

---

शुक्रसीनं। प्रियाह्वा कङ्गुणिका। विषाख्या अतिविषा। विषा काकोली　प्रथमक
इह दण्डकश्चण्डवृष्टिप्रयातो नदयानाप्यनाप्यरैः सप्तभिः। प्रतिपदमिह वृद्धिरेफवध्या-
स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः॥ १७—१८॥

नतेति। नतादिभिर्मूत्रवर्गेण गोमूत्रादिमूत्रकदम्बकेन सपिः पक्वं विधिविनिहितं
सर्वैः क्रमैरभ्यङ्गपाननस्यादिभिर्योजितं। शीघ्रं सर्वान् ग्रहादीन् हन्ति। एतच्च महा-
भूतरावसंज्ञं घृतं। दण्डको व्यालाख्यः॥ १६॥

ग्रहा इति। येषु दिनेषु ग्रहा गृह्णन्ति तेषु दिनेषु तेषां ग्रहाणां विशेषेण बलि-
होमादीन् भिषक् प्रयुञ्जीत॥ २०॥

स्नानेति। स्नानवस्त्रादि यद्येभ्यो ग्रहेभ्यो रोचते तत्तेभ्यस्तस्मिन् दिने दद्यात्।
रत्नानीति। तथा रत्नादीनि तथा बीजानि यवादीनि मधुसर्पिषी सर्वे च भक्ष्याः
सर्वेषां ग्रहाणामित्ययं सामान्यो विधिः॥ २१—२२॥

सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये ।
दिश्युत्तरस्यां तत्रापि देवायोपहरेद्बलिम् ॥ २३ ॥
पश्चिमायां यथाकालं दैत्यभूताय चत्वरे ।
गन्धर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ॥ २४ ॥
पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे ।
यक्षाय यक्षायतने सरितोर्वा समागमे ॥ २५ ॥
चतुष्पथे राक्षसाय भीमेषु गहनेषु च ।
रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम् ॥
शून्यालये पिशाचाय पश्चिमां दिशमाश्रिते ॥ २६
शुचिशुक्लानि माल्यानि गन्धाः क्षैरेयमोदनम् ।
दधिछत्रञ्च धवलं देवानां बलिरिष्यते ॥ २७ ॥
हिङ्गु-सर्षप-षड्ग्रन्था-व्योषैरर्द्धपलोन्मितैः ।
चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ॥
तत्पान-नावनाभ्यङ्गैर्देवग्रहविमोक्षणम् ॥ २८ ॥
नस्याञ्जनं वचा-हिंगु-लशुनं बस्तवारिणा ।
दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः ॥ २९ ॥

---

सुरेति । सुरादिभ्यः पञ्चभ्यः सुरालये बलिं दद्यात् । तत्रापि देवायोत्तरस्यां [दिशि बलि]मुपहरेत् । दैत्यभूताय पश्चिमायां दिशि चत्वरे बलिमुपहरेत् । गवां पथि वस्त्राभरणसहितं बलिं गन्धर्वायोपहरेत् । पितृनागग्रहेभ्यो नद्यां बलिं दद्यात् । नागेभ्यः पूर्वदक्षिणदेशे बलिं दद्यात् । यक्षाय यक्षप्रासादे । अथवा सरितोर्नद्योः समागमे बलिमुपहरेत् । राक्षसशब्देनेह ब्रह्मराक्षसो गृह्यते । राक्षसाय चतुष्पथे भयानकेषु वनेषु च बलिं दद्यात् । दक्षिणस्यां तु दिशि राक्षसानां बलिं दद्यात् । पूर्वस्यां दिशि ब्रह्मरक्षसां, शून्यालये पश्चिमां दिशमाश्रिते पिशाचाय बलिं दद्यात् ॥२३—२६ ॥

शुचीति । शुचिशुक्लमाल्यादिकञ्च देवानां बलिरिष्यते ॥ २७ ॥

हिङ्ग्विति । हिंग्वादिभिरर्द्धपलिकैः सर्पिः प्रस्थं चतुर्गुणे गोमूत्रे विपाचयेत् । तत्पानादिभिर्देवग्रहविमोक्षणं स्यात् ॥ २८ ॥

नस्याञ्जनमिति । वचाहिङ्गुलशुनं छागमूत्रेण नस्यमञ्जनञ्च दद्यात् ॥ दैत्य इति । दैत्यग्रहे बलिर्बहूनि फलानि यस्मिंस्तथोशीरकमलोत्पलैर्युक्तो देयः ॥ २९ ॥

नागानां सुमनोलाजगुडापूपगुडौदनैः ।
परमान्न-मधु-क्षीर-कृष्णमृन्नागकेसरैः ॥ ३० ॥
वचा-पद्म-पुरोशीर-रक्तोत्पल-दलैर्बलिः ।
श्वेतपत्रञ्च रोध्रञ्च तगरं नागसर्षपाः ॥
शीतेन वारिणा पिष्टं नावनाञ्जनयोर्हितम् ॥ ३१ ॥
यक्षाणां क्षीर-दध्याज्य-मिश्रकौदन-गुग्गुलुः ।
देवदारूत्पलं पद्ममुशीरं वस्त्रकाञ्चनम् ॥ ३२ ॥
हिरण्यञ्च बलिर्योज्यो मूत्राज्यक्षीरमेकतः ।
सिद्धं समोन्मितं पान-नावनाभ्यञ्जने हितम् ॥ ३३
हरीतकी हरिद्रे द्वे लसुनो मरिचं वचा ।
निम्बपत्रञ्च बस्ताम्बुकल्कितं नावनाञ्जनम् ॥ ३४ ॥
ब्रह्मरक्षोबलिः सिद्धं यवानां पूर्णमाढकम् ।
तोयस्य कुम्भः पललं छत्रं वस्त्रं विलेपनम् ॥ ३५ ॥
गायत्रीविंशतिपलक्वाथेऽर्द्धपलिकैः पचेत् ।
त्र्यूषणत्रिफला-हिंगु-षड्ग्रन्था-मिशि-सर्षपैः ॥ ३६ ॥
सनिम्बपत्रलशुनैः कुडवान्सप्त सर्पिषः ।
गोमूत्रे त्रिगुणे पाने नस्याभ्यङ्गेषु तद्धितम् ॥ ३७ ॥

---

नागानामिति । नागानां सुमनोलाजादिभिर्बलिर्देयः । वचादयः शीतलजल-पिष्टा नस्येऽभ्यङ्गे च हिताः । श्वेतपत्रं शुक्लपुण्डरीकं ॥ ३०—३१ ॥

यक्षाणामिति । यक्षाणां क्षीरादिभिर्बलिर्योज्यः । मूत्रेति । गोमूत्रक्षीरघृतं तुल्यप्रमाणमेकस्मिन् पक्वं नस्याभ्यङ्गयोर्हितम् ॥ ३२—३३ ॥

हरीतकीति । हरीतक्यादि छागमूत्रेण पिष्टं नावनाञ्जने हितम ॥ ३४ ॥

ब्रह्मेति । पक्वं यवानामाढकं पात्रं पूर्णं जलकुम्भः पललं छत्रं वस्त्रं प्रलेपनमिति ब्रह्मराक्षसाय बलिं दद्यात् । यवानां पूर्णं सिद्धमाढकं पक्वं पात्रं यवैः पूर्णंपक्वपात्र-मित्यर्थः । पूरणार्थेऽत्र षष्ठी । आढकशब्दोऽत्र पात्रवाचको न तु मानवाचकः । पक्वपात्रं पक्वशरावमिति ॥ ३५ ॥

गायत्रीति । खदिरविंशतिपलक्वाथे-त्र्यूषणादिभिरर्द्धपलिकैः सप्त कुडवान् घृतस्य गोमूत्रे त्रिगुणे पचेत् । तत्पानादिषु हितं ॥ २६—२७ ।

रक्षसां पललं शुक्तं कुसुमं मिश्रकौदनम्।
बलिः पक्वाममांसानि निष्पावा रुधिरोक्षिताः ॥ ३८ ॥
नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च।
तद्वच्च कृष्णापाटल्या बिल्वमूलं कटुत्रिकम् ॥ ३९ ॥
हिंग्विन्द्रयव-सिद्धार्थ-लशुनामलकीफलम्।
नावनाञ्जनयोर्योज्यो बस्तमूत्रहृतोऽगदः ॥ ४० ॥
एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे।
रक्षोग्रहान् वारयते पानाभ्यञ्जन-नावनैः ॥ ४१ ॥
पिशाचानां बलिः सीधुपिण्याकः पललं दधि।
मूलकं लवणं सर्पिः सभूतौदन-यावकम् ॥ ४२ ॥
हरिद्राद्वय-मञ्जिष्ठा-निशि-सैन्धव-नागरम्।
हिंगु-प्रियंगु-त्रिकटु-रसोन-त्रिफला वचा ॥ ४३ ॥
पाटलाश्वेतकटभीशिरीषकुसुमैर्घृतम्।
गोमूत्रपादिकं सिद्धं पानाभ्यञ्जनयोर्हितम् ॥ ४४ ॥
बस्ताम्बुपिष्टैस्तैरेव योज्यमञ्जन-नावनम् ॥ ४५ ॥
देवर्षिपितृगन्धर्वे तीक्ष्णं नस्यादि वर्जयेत्।
सर्पिःपानादिमृद्वस्मिन् भेषज्यमवचारयेत् ॥ ४६ ॥

---

रक्षसामिति। राक्षसानां पललादयो यावन्निष्पावलोहितसिक्तो बलिर्देयः ॥ ३८ ॥
नक्तमालेति। नक्तमालादिकं बस्तमूत्रेण हृतोऽगदो नस्याभ्यञ्जनयोर्योज्यः ॥३९—४० ॥
एभिरिति। एभिरेव द्रव्यैर्घृतं गोमूत्रेण चतुर्गुणेन सिद्धं पानादिभीरक्षोग्रह-निवारणं स्यात् ॥ ४१ ॥
पिशाचानामिति। पिशाचानां सीध्वादिभिर्बलिर्देयः ॥ ४२ ॥
हरिद्रेति। हरिद्राद्वयादिभिर्गोमूत्रपादिकं घृतं पक्वं परं पानाभ्यञ्जनयोर्हितं ॥ ४३—४४ ॥
बस्ताम्बुपिष्टैरिति। बस्ताम्बुपिष्टैस्तैरेव द्रव्यैर्नस्यमञ्जनञ्च हितमुक्तम् ॥ ४५ ॥
देवर्षीति। देवर्षिपितृगन्धर्वे तीक्ष्णं नस्यादि वर्जयेत्। मृदु सर्पिःपानादिकमौषधमत्र योज्यम् ॥ ४६ ॥

ऋते पिशाचान्सर्वेषु प्रतिकूलञ्च नाचरेत् ।
सर्वेद्यमातुरं घ्नन्ति क्रुद्धास्तेहि महौजसः ॥ ४७ ॥
ईश्वरं द्वादशभुजं नाथमार्य्यावलोकितम् ।
सर्वव्याधिं चिकित्सं तं जपन् सर्वग्रहान् जयेत् ॥
तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम् ॥ ४८ ॥
महाविद्याञ्च मायूरीं शुचिं तं श्रावयेत्सदा ॥ ४९ ॥
भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।
जपन् सिद्धांश्च तन्मन्त्रान् ग्रहान् सर्वानपोहति ॥ ५० ॥
यच्चानन्तरयोः किञ्चिद्वक्ष्यतेऽध्याययोर्हितम् ।
यच्चोक्तमिह तत्सर्वं प्रयुञ्जीत परस्परम् ॥ ५१ ॥

इत्यष्टाङ्गहृदये भूततन्त्रे भूतप्रतिषेधो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

ऋते इति । सर्वेषु च ग्रहेषु पिशाचमन्तरेण प्रतिकूलं नाचरेत् । ते हि देवादयो महौजसः प्रतिकूलाचरणात् क्रुद्धाः सन्तः सर्वेद्यमातुरं घ्नन्ति ॥ ४७ ॥

ईश्वरमिति । ईश्वरं द्वादशभुजं नाथमार्य्यावलोकितं । तथा सर्व्वव्याधिं चिकित्सन्तमित्यादि जपन् सर्वान् ग्रहानुन्मादादींश्च पराकरोति ॥ ४८ ॥

महाविद्यामिति । मायूरीं महाविद्यां तं ग्रहगृहीतं शुचिं सन्तं सततं श्रावयेत् ॥ ४९ ॥

भूतेशमिति । तथा स्थाणुं भूताधिपं पूजयेत् । तथा तस्य गणान् प्रमथसंज्ञान् पूजयेत् । सिद्धांश्च सिद्धमन्त्रान् जपन् सर्व्वग्रहान् पराकरोति ॥ ५० ॥

यदिति । यदप्यनन्तरयोरध्याययोरुन्मादापस्मारप्रतिषेधाख्ययोर्वक्ष्यति भणिष्यति तच्चात्र हितम् । यच्चास्मिन्नध्याये देवग्रहादीनां पृथक् चिकित्सितं कथितं तदपि ग्रहाणां परस्परं प्रयुञ्जीत ॥ ५१ ॥

इति श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने भूतप्रतिषेधो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथात उन्मादप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ॥ २ ॥

उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥ ३ ॥

शारीरमानसैर्दुष्टैरहितादन्न पानतः ।
विकृतासात्म्यसमलाद्विषमादुपयोगतः ॥
विषमस्याल्पसत्त्वस्य व्याधिवेगसमुद्गमात् ।
क्षीणस्य चेष्टावैषम्यात् पूज्यपूजाव्यतिक्रमात् ॥
आधिभिश्चित्तविभ्रंशाद् विषेणोपविषेण च ।
एभिर्विहीनसत्त्वस्य हृदि दोषाः प्रदूषिताः ॥
धियो विधाय कालुष्यं हत्वा मार्गान् मनोवहान् ।
उन्मादं कुर्व्वते तेन धी-विज्ञान-स्मृति-भ्रमात् ॥
देही दुःखसुखभ्रष्टो भ्रष्टसारथिवद्रथः ।
भ्रमत्यचिन्तितारम्भस्तत्र वातात् कृशाङ्गता ॥

---

भूतप्रतिषेधानन्तरमुन्मादापस्मारप्रतिषध उच्यते चिकित्सासामान्यात् । तत्राप्यपस्मारादुन्मादस्य पूर्वमुपन्यासो बहुवक्तव्यत्वादित्याह अथात इति । उन्मादस्य प्रतिषेधं चिकित्सितं भणिष्यामः ॥ १ ॥

उन्मादा इति । प्रत्येकं दोषैस्त्रयः सान्निपातिक आधिजो विषजश्च ति ॥ २ ॥

उन्माद इति । उन्मादो दोषैर्वातपित्तकफैरुन्मार्गगैरपरत्र प्रस्थितैर्मनसो यो मदः स उन्मादो नाम रोग उच्यते ॥ २—३ ॥

अधुना विस्तरेणोत्पत्तिक्रममुन्मादानामाह,—शारीरेति । शारीरमानसैर्दोषैर्दुष्टैर्यावदुपविषेण चेति । एभिरमीभिर्हेतुभिर्दोषा हृदये प्रदूषिताः सन्तो हीनसत्वस्य पुंसो बुद्धेः कालुष्यं कृत्वा तथा चित्तवहानि स्रोतांसि हत्वोन्मादं कुर्व्वते । तेनोन्मादेन देही बुद्धिभ्रमान्नष्टसुखदुःखो भ्रष्टसारथिरिव रथो भ्रमति । अचिन्तितारम्भः । अचिन्तितोऽनिरूपितः क्रियारम्भ उद्यमो यस्य स एवम् । इति सामान्यलक्षणमुन्मादस्योक्त्वा

अस्थाने रोदनाक्रोश-हसित-स्मित-नर्त्तनम्।
गीत-वादित्र-वागङ्गविक्षेपास्फोटनानि च॥
असाम्ना वेणुवीणादिशब्दानुकरणं मुहुः।
आस्यात् फेनागमोऽजस्रमटनं बहुभाषिता॥
अलङ्कारोऽनलङ्कारैरयानैर्गमनोद्यमः।
गृद्धिरभ्यवहार्य्येषु तल्लाभे वावमानता॥
उत्पिण्डितारुणाक्षित्वं जीर्णे चान्ने गदोद्भवः॥ ४॥
पित्तात् सन्तर्जनं क्रोधो मुष्टिलोष्ट्राद्यभिद्रवः।
शीतच्छायोदकाकाङ्क्षा नग्नत्वं पीतवर्णता।
असत्य-ज्वलन-ज्वाला-तारका दीपदर्शनम्॥ ५॥
कफादरोचकश्छर्दिरल्पेहाहारवाक्यता।
स्त्रीकामता रहःप्रीतिर्लालासिङ्घाणकस्रुतिः॥
बैभत्स्यं शौचविद्वेषो निद्रा श्वयथुरानने।
उन्मादो बलवान् रात्रौ भुक्तमात्रे च जायते॥ ६॥
सर्व्वायतनसंस्थानसन्निपाते तदात्मकम्।
उन्मादं दारुणं विद्यात् तं भिषक् परिवर्ज्जयेत्॥ ७॥
धन-कान्तादि-नाशेन दुःसहेनाभिषङ्गवान्।
पाण्डुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते॥
रोदित्यकस्मात् म्रियते तद्‌गुणान् बहु मन्यते।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते॥ ८॥

---

पवनादिजस्य विशिष्टं लक्षणमाह,—तत्रेति। वातादुन्मादे सति कृशाङ्गादिलक्षणञ्च जीर्णे चान्ने गदोद्भव इत्यन्तम्। अस्थाने अप्रसङ्गे रोदनादीनि। असाम्ना औद्धत्येन पुनः पुनः वेणुवीणादिवाद्यस्यानुकरणम्॥ ४॥

पित्तादिति। पित्तादुन्मादे सति सन्तर्ज्जनक्रोधादयः। असत्यानां ज्वलनादीनां दर्शनम्। कफादिति। कफादुन्मादे सत्यरोचकादयः स्युः। तथा रात्रौ बलवान् सद्यो भुक्ते च स्यात्। सर्व्वेति। आयतनानि निमित्तानि। संस्थानानि लिङ्गानि। सर्व्वाणि त्रिदोषविषयाण्यायतनानि संस्थानानि यस्मिन् सन्निपाते तदात्मकं त्रिदोषोत्थमुन्मादं दारुणं मारणात्मकं विद्यात्। तमुन्मादं नोपक्रमेत्। अथ चित्तजमुन्मादं

विषेण श्यावव्रदनो नष्टच्छायाबलेन्द्रियः ।
वेगान्तरेऽपि सम्भ्रान्तो रक्ताचस्तं विवर्जयेत् ॥ ९ ॥
अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्व्वमावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ १० ॥
कफ-पित्तभवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्ध-स्विन्नस्य बस्तिञ्च शिरसः सविरेचनम् ॥
तथास्य शुद्धदेहस्य प्रसादं लभते मनः ॥ ११ ॥
इत्थमप्यनुवृत्तौ तु तीच्णं नावनमञ्जनम् ।
हर्षणाश्वासनोत्त्रास-भय-ताड़न-तर्ज्जनम् ।
अभ्यङ्गोद्वर्तनालेपधूमान् पानञ्च सर्पिषः ॥
युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः ॥ १२ ॥
हिंगु-सौवर्च्चल-व्योषैर्द्वि पलांशैर्घृताढ़कम् ।
सिद्धं समूत्रमुन्मादभूतापस्मारनुत्परम् ॥ १३ ॥
द्वौ प्रस्थौ स्वरसाद् ब्राह्म्या घृतप्रस्थञ्च साधितम् ।
व्योष-श्यामा-त्रिवृद्दन्ती-शङ्खपुष्पी-नृपद्रुमैः ॥

---

वक्ति,—धनेति । धनादिनाशेन दुःसहेनाभिषङ्गेवानुन्मादः स्यात् । तेन पाण्डादिकः सन्निदमिदं करोति । तथा खिन्नः शोकचेता ध्यायन् जागरणशीलो विचेष्टते ॥ ५-८ ॥

विषेणेति । विषेणोन्मादे श्यावव्रदनः स्यात् । तं वर्ज्जयेन्नोपक्रमेत् । अथेति । अथेष्टष्युन्मादलक्षणेऽवगते सति पवनजो य उन्मादस्तस्मिन् स्नेहपानं पूर्व्वं कारयेत् । आवृतवर्त्मनि त्वनिले सस्नेहं मृदुशोधनं पूर्व्वं स्नेहपानात् कारयेत् । कफेति । कफभवे पित्तभवे चोन्मादे स्निग्धस्विन्नस्य नरस्य यथासंख्यं वमनं विरेचनञ्च कारयेत् । अपिशब्दान्न केवलं पवनजे स्नेहपानमादौ यावत् कफपित्तोत्थेऽपि कार्य्यमिति गमयति । तथाच मुनिः । "उन्मादं स्नेहपानेन पूर्व्वं सर्व्वमुपाचरेत्" इति । बस्तिं शिरसः सविरेचनं त्रिष्वप्युन्मादेषु कारयेत् । तथाच एवं शुद्धशरीरस्य सतो मनः प्रसीदति ॥ ९—११ ॥

इत्थमिति । एवमप्युपक्रान्त उन्मादेऽस्यानुबन्धे सति तीक्ष्णं नावनाञ्जनं युञ्ज्यात् । हर्षणादि च । कुतः ? यस्मादेतानि कृतानि शुद्धदेहस्य चित्तं प्रकृतिं प्रापयन्ति । हिंग्विति । हिङ्ग्वादिभिर्द्विपलिकैर्घृतस्याढ़कं गोमूत्रेण पचेत् । तच्चोपयुक्तं परममुन्मादादिजित् । द्वाविति । ब्राह्मीस्वरसात् प्रस्थद्वयं घृतस्य प्रस्थं व्योषादिभिः कार्षिकै-

ससप्तला-क्रमिहरैः कल्कितैरक्षसम्मितैः ।
पलवृद्ध्या प्रयुञ्जीत परं मात्राचतुष्पलम् ॥
उन्माद-कुष्ठापस्मारहरं बन्ध्यासुतप्रदम् ।
वाक्-स्वर-स्मृति-मेधाकृत् धन्यं ब्राह्मीघृतं स्मृतम् ॥ १४॥
वरा-विशाला-भद्रैला- देवदार्वेलवालुकैः ।
द्विसारिवा-द्विरजनी-द्विस्थिरा-फलिनी-नतैः ॥
बृहती-कुष्ठ-मञ्जिष्ठा-नागकेसर-दाड़िमैः ।
वेल्ल-तालीसपत्रैला-मालतीमुकुलोत्पलैः ॥
सदन्ती-पद्मक-हिमैः कर्षांशैः सर्पिषः पचेत् ।
प्रस्थं भूतग्रहोन्माद-कासापस्मारपाप्मसु ॥
पाण्डूकण्डूविषे शोफे मोहे मेहे गरे ज्वरे ।
अरेतस्यप्रजसि वा दैवोपहतचेतसि ।
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ॥
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ १५ ॥
एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिं ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणम् ॥
वीरा-द्विमेदा-काकोली-कपिकच्छू-विषाणिभिः ।
सूर्पपर्णीयुतैरेतन्महाकल्याणकं परम् ॥

---

रजीकृतैः पक्वं पलवृद्ध्या । पलं प्रथमेऽह्नि । द्विपलं द्वितीयेऽह्नि । त्रिपलं तृतीयेऽह्नि । चतुष्पलं चतुर्थेऽह्नि । ततः परं चतुष्फलमित्येवं प्रयुञ्जीत । तच्चोन्मादादिजिद्वन्ध्यासुतप्रदं वागादिकृच्छिवं ब्राह्मीघृतं स्मृतम् ॥ १२—१४ ॥

वरेति । वरादिभिः कर्षप्रमाणैर्घृतप्रस्थं पचेत् । तच्चोपयुक्तं भूतग्रहादिषु श्रेष्ठं बल्यादिगुणञ्च । कल्याणकाख्यमितत्सर्पिः पुंसवनेषु च वरम् । अत्र च भद्रैलास्थूलैला । एभ्य इति । एभ्यो वरादिभ्यो मध्यादाद्यानि सप्त हित्वा द्विसारिवादीन्येकविंशतिञ्जले षोड़शगुणे स्नेहापेक्षया पचेद्यावत् स्नेहाच्चतुर्गुणः क्वाथस्तस्मिन् स्नेहचतुर्गुणे रसे सर्पिर्गृष्टिक्षीरचतुर्गुणं, वीरादिभिः स्नेहकथितैः पादिकैः कल्कीकृतैः पचेत् । एतन्महाकल्याणकं नाम घृतं पूर्व्वस्मात् कल्याणकाद्गुणैरधिकमित्यक्तम् । अत द्विसारिवादीनां

बृंहणं सन्निपातघ्नं पूर्व्वस्मादधिकं गुणैः ॥ १६ ॥
जटिला पूतना केशी चारटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥
कायस्था शूकरी छत्रा अतिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता च वयस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली शालपर्णी च तैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥
महापैशाचकं नाम घृतमेतद्यथामृतम् ।
बुद्धि-मेधा-स्मृतिकरं बालानाञ्चाङ्गवर्द्धनम् ॥ १७ ॥
ब्राह्मीमैन्द्रीविड़ङ्गानि व्योषं हिङ्गु जटां मुराम् ।
रास्नां विशल्यां लशुनं विषघ्नां सुरसां वचाम् ॥
ज्योतिष्मतीं नागविन्नामनन्तां सहरीतकीम् ।
काञ्छीञ्च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ॥
वर्त्तिर्नस्याञ्जनालेप-धूपैरुन्मादसूदनी ॥ १८ ॥
अवपीड़ाश्च विविधाः सर्षपाः स्नेहसंयुताः ।
कटुतलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः ।
सहिङ्गुस्तीच्णधमश्च सूत्रस्थानोदितो हितः ॥ १९ ॥

---

पाठादेवैकविंशतित्वं चेत् अतद्गुणसंविज्ञानो बहुव्रीहिरिति कस्यचिद् भ्रान्तिः स्यात् । एवञ्च सारिवादिद्वयस्य ग्रहणं न प्राप्नुयादित्येकविंशतिग्रहणम् ॥ १५—१६ ॥

जटिलेति । जटिलादिभिर्घृतं पक्वं चातुर्थकादिनाशनन् । जटिला जटामांसी, पूतना हरीतकी, केशी गन्धमांसी, चारटी पद्मचारिणी, मर्कटी कपिकच्छूः, जया अरणिका, वीरा काकोलिका । चोरकश्चण्डा, वयस्था धात्री, शूकरी वृद्धदारकः, छत्रा धान्यकम्, अतिच्छत्रा शतपुष्पा, पलङ्कषा लाचा, महापुरुषदन्ता शतावरी, कायस्था चोरकाकोली, नाकुलीद्वयं सर्पाची सर्पसुगन्धा च, महापैशाचकसंज्ञं चातुर्थकादिनाशनम्, तथाऽमृततुल्यं महागुणत्वात् । बुद्ध्यादिकं शिशूनाञ्च संवर्धयति ॥ १७ ॥

ब्राह्मीति । ब्राह्म्यादिभिर्गजमूत्रपिष्टा वर्तिश्छायायां विशोषिता नस्यादिभिरुन्मादघ्नत् । विषघ्नाऽतिविषा, विशल्या लाङ्गली, नागविन्ना नागदन्ती, काञ्छी सौराष्ट्रिका । अवपीड़ाश्चेति । कल्काद्यैरवपीड़स्तूति कथितोऽवपीड़ः । तेऽवपीड़ाः सर्षपयुता हिताः ।

शृगाल-शल्यकोलूक-जलूका-वृष-बस्तजैः ।
मूत्र-पित्त-शकृल्लोम-नख-चर्म्मभिराचरेत् ।
धूप-धूमाञ्जनाभ्यङ्ग-प्रदेह-परिषेचनम् ॥ २० ॥
धूपयेत् सततञ्चैनं श्व-गोमत्स्यैस्तु पूतिभिः ।
वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः ।
शिशिराण्यन्नपानानि मधुराणि लघूनि च ॥ २१ ॥
विध्येच्छिरां यथोक्तां वा तृप्तं मेध्यामिषस्य वा ।
निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ॥ २२ ॥
प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया ।
आश्वासयेत् सुहृत् तं वा वाक्यैर्धर्म्मार्थसंहितैः ॥
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ।
बद्धं सर्षपतैलाक्तं न्यसेच्चोत्तानमातपे ॥
कपिकच्छ्वाथवा तप्तैर्लोह-तैल-जलैः स्पृशेत् ।
कशाभिस्ताड़यित्वा वा बद्धं श्वभ्रे विनिक्षिपेत् ॥
अथवा वीतशस्त्राश्मजने सन्तमसे गृहे ।
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ॥

---

अभ्यङ्गश्च सर्षपतैलेन । तथाऽस्य तद्रजः सर्षपचूर्ण घ्राणे आध्मापयत् । तथा सूत्रस्थानोक्तस्रोत्रणी धूमी हिङ्गुना सह हितः । शृगालेति । शृगालादिमूत्रादिभिर्धूपादिकमाचरेत् । अत्र जलूका चर्म्मचटिका । धूपयेदिति । एनञ्चोन्मादिनं पुनः पुनश्च गो-मत्स्यादिभिः सुष्ठु पूतिगन्धिभिर्धूपयेत् । वातश्लेष्मात्मके बाहुल्येनैवोपक्रमः । पैत्तिकेति । पैत्तिके तून्मादे तिक्तकं सर्पिर्जीवनीयञ्च शस्यते । तथा मिश्रको यमकः स्नेहः प्रशस्यते । तथा शिशिराणि मधुराण्यन्नपानानि लघूनि शस्यन्ते । विध्येदिति । तथा शिराविध्युक्तां शिरां विध्येत् । मेदुरमांसस्य तृप्तं निवाते स्वापयेच्च । एवं कृते सति मतिविभ्रमात् मुच्यते ॥ १८—२२ ॥

प्रक्षिप्येति॥ अथवा जलवर्जिते कूपे प्रक्षिप्य क्षुधा शोषयेत् । अथवा तमुन्मादवन्तं सुहृद्धर्म्मार्थयुतैर्वाक्यैराश्वासयेत् सान्त्वयेत् । अथवाऽस्य पुत्रादेर्विनाशं ब्रूयात् । अद्भुतानि वा तं दर्शयेत् । अथवा कटुतैलेनाभ्यक्तं बध्वा तमुत्तानं कृत्वाऽतपे न्यसेत् । कपिकच्छ्वा स्पृशेत् । अथवा तप्तलौहादिभिरथवा चर्म्मकशाभिराहत्य बद्धं सन्तमसे

अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्।
भापयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया॥
देहदुःखभयेभ्यो हि परं प्राणभयं मतम्।
तेन याति शमं तस्य सर्व्वतो विप्लुतं मनः॥ २३॥
सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया॥ २४॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्तिः सान्त्वाश्वासैः शमं नयेत्॥ २५॥
काम-शोक-भय-क्रोध-हर्षेर्ष्या-लोभसम्भवान्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्॥ २६॥
भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम्।
यद्युन्मादे ततः कुर्य्याद् भूतनिर्द्दिष्टमौषधम्॥ २७॥
बलिञ्च दद्यात् पललं यावकं सक्तु-पिण्डिकाम्।
स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान्॥
पक्वामकानि मांसानि सुरामैरेयमासवम्।

---

विनिःक्षिपेत्। शस्त्रादिवर्जिते त्वगारे भवने वा बद्धा विनिःक्षिपेत्। ननु चैकस्य शून्यगृहे स्थितिरुन्मादस्य निदानमुक्तम्। यच्च यस्य निदानं तदेव तस्य कथं चिकित्सितं स्यात्? नैष दोषः। तदर्थकारिभेषजत्वात्। तदर्थकारिणि हि भेषजे यदेव निदानं तदेवौषधम्। यथा तुल्यदग्धेऽग्निप्रतपनम्। मदात्यये मद्यपानमिति तद्वदिहाप्यवगन्तव्यम्। अथवा समुत्पाटितदंष्ट्रेण सर्पेण भीषयेत्। दान्तैर्गजादिभिर्वा। राजपुरुषा बहिर्नीत्वा सुष्ठु तं यन्त्रितं कृत्वा राजाज्ञया तर्जयन्तो वधेन भापयेयुः। यतो देहदुःखभयेभ्यः सकाशात् परमतिशयेन प्राणभयं मतम्। तेन भयेन इतश्च तच्चित्तं विप्लुतमुन्मादिनः शममेति॥ २३॥

सिद्धेति। इयं क्रिया देशाद्यपेक्षया सिद्धा प्रयोजनीया। इष्टद्रव्येति। इष्टद्रव्यविनाशाद् यस्य मानसमुपहन्यते तस्य तादृशी तुल्या प्राप्तिः कार्य्या। तथा सान्त्वनैश्वाश्वासनैश्च शममुन्मादिनं नयेत्। कामेति। कामादिजानुन्मादानन्योन्यप्रतिपक्षैरेभिरेव कामादिभिः शमं नयेत्। भूतानुबन्धमिति। भूतैर्देवादिभिः पूर्व्वोक्तैरनुबन्धोऽनुषङ्ग एव तमनन्तरोक्त आगन्तावुन्मादे यदीक्षेत ततो भूतप्रतिषेधोक्तमौषधं कुर्य्यात्। ननु कथमीक्षणं कर्त्तुं शक्येत इति विशेषणद्वारेण हेतुमाह,—प्रोक्तलिङ्गाधिकाकृतिमिति। प्रोक्तानि पूर्व्वं षड्विधस्योन्मादस्य यानि लिङ्गानि तेभ्योऽधिकाऽऽकृतिर्लक्षणं यस्य भूतानुबन्धस्य तं तथाविधम्॥ २४—२७॥

अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ॥
चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च ॥ २८ ॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिरुन्मादैः सत्त्ववान्न स युज्यते ॥ २९ ॥
प्रसाद इन्द्रियार्थानां बुध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ३० ॥
इत्यष्टाङ्गहृदये भूततन्त्र उन्मादप्रतिषेधो नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातोऽपस्मारप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

---

बलिमिति । तथाऽत्र भूतानुबन्धे पलल-यावकादि च यावत् पुष्पाणि सहचरस्य चेति बलिं दद्यात् । क्व ? चतुष्पथे । तथा गोतीर्थे नद्योर्वा सङ्गमे । निवृत्तेति । यः पुरुषो निवृत्तमद्यमांसो हितभोजी प्रयतः शुचिः स्यात्, स सात्त्विको निजागन्तुभिरुन्मादैर्न युज्यते । तस्मादीदृशेन भवितव्यमिति भावः । प्रसाद इति । इन्द्रियार्थानां प्रसन्नत्वं तथा बुद्ध्यात्ममनसाञ्च धातूनां प्रकृतिस्थत्वञ्चेति विगतोन्मादस्य लक्षणम् ॥ २८—३० ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने उन्मादप्रतिषेधो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

अस्मादनन्तरमपस्मारप्रतिषेध उच्यते । चिकित्सासामान्यात् । अथात इति । स्मृतेरपायो विनाशोऽपस्मार उच्यते । इत्यपस्मारस्य निर्वचनार्थमेतद्वचनम् । स च स्मृतिविनाशी बुद्ध्यादिविनाशाच्चित्ते चिन्ताद्यभिहते तथोन्मादवच्चित्तदेहगतैर्दोषैः प्रकुपितैः सत्त्वे हते हृदये व्याप्ते तथा संज्ञावाहिषु स्रोतःसु व्याप्तेषु सत्सु जायते । तस्मिंश्च जाते सति मूढमतिः सन् तमो मोहं विशन् बीभत्सा निन्दिताः क्रियाः कुरुते । ननु

स्मृत्यपायो ह्यपस्मारः स धीसत्त्वाभिसंप्लवात् ।
जायतेऽभिहते चित्ते चिन्ता-शोक-भयादिभिः ॥
उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः ।
हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥
तमोविशन्मूढ़मतिर्बीभत्साः कुरुते क्रियाः ।
दन्तान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन् ॥
पश्यन्नसन्ति रूपाणि प्रस्खलन् पतति क्षितौ ।
विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥
कालान्तरेण स पुनश्चैवमेव विचेष्टते ॥ २ ॥
अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन तु ॥ ३ ॥
रूपमुत्पित्सुमानेऽस्मिन् हृत्कम्पः शून्यता भ्रमः ।
तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतम् ॥
अशब्दश्रवणं स्वेदो लालासिङ्घाणकस्रुतिः ।
अविपाकोऽरुचिर्मूर्च्छा कुक्ष्याटोपो बलक्षयः ॥
निद्रानाशोऽङ्गमर्दस्तृट् स्वप्ने गानं सनर्त्तनम् ।
पानं मद्यस्य तैलस्य तयोरेव च मेहनम् ॥ ४ ॥
तत्र वातात् स्फुरत्सक्थिः प्रपतंश्च मुहुर्मुहुः ।
अपस्मरति संज्ञाञ्च लभते विस्वरं रुदन् ॥

---

तमोद्रव्यविशेष इह उच्यते तस्य दिवाऽसम्भवात्। यदि वा तमसोऽसम्भवस्यापि दर्शनं सम्भाव्यमेव रोगस्वभावात् । अतएव वक्ष्यति । "पश्यन्नसन्ति रूपाणि" इति । ता एव क्रिया वक्ति,—दन्तानित्यादि यावद्विजिह्माक्षिभ्रुव इति । विजिह्मक्षिभ्रुवं यस्य स एवम् । अक्षिभ्रुवशब्दोऽचतुरादिना निपातितः । दोषवेगे चातिक्रान्ते विबुध्यते प्रकृतिं याति, कालान्तरे सोऽपस्मारी एवमेव पूर्व्वं व्यक्तं करोति ॥ १—२ ॥

अपस्मार इति । अपस्मारश्चतुःप्रकारः । कथमित्यादि । वातादिभिः सन्निपातेन च । रूपमिति । अस्मिन्नपस्मार उद्बुभूषति सति हृत्कम्पादयः स्युः । अक्षिवैकृतमिति । विकृतिशब्दात् स्वार्थे प्रज्ञादित्वादण् । स्वप्ने च गानादि स्यात् । तैलमद्ययोः पानं तयोरेव मेहनं मूत्रणं स्यात् ॥ ३—४ ॥

तत्रेति । तत्र तेषु मध्याद्वातादपस्मारे सति स्फुरत्सक्थ्यादिकः स्यात् । अपस्मरतीति । विस्मारयति इति पुनः पुनः संज्ञां चेतनां लभते । धीसत्त्वाभिमुखत्वं

उत्पिण्डिताक्षः श्वसिति फेनं वमति कम्पते ।
आविध्यति शिरोदन्तान् दशत्याध्मातकन्धरः ॥
परितो विक्षिपत्यङ्गं विषमं विनताङ्गुलिः ।
रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ।
चपलं परुषं रूपं विरूपं विकृताननम् ॥ ५ ॥
अपस्मरति पित्तेन मुहुः संज्ञाञ्च विन्दति ।
पीत-फेनाक्षि-वक्त्र-त्वगास्फालयति मेदिनीम् ।
भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ ६ ॥
कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम् ।
चेष्टाऽल्पा भूयसी लाला शुक्ल-नेत्र-नखास्यता ॥
शुक्लाभरूपदर्शित्वं सर्व्वलिङ्गन्तु वर्ज्जयेत् ॥ ७ ॥
अथावृतानां धी-चित्त-हृत्खानां प्राक् प्रबोधनम् ।
तीक्ष्णैः कुर्य्यादपस्मारे कर्म्मभिर्वमनादिभिः ॥ ८ ॥
वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ ९ ॥
सर्व्वतस्तु विशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षाय योगान् संशमनान् शृणु ॥ १० ॥
गोमयस्वरस-क्षीर-दधि-मूत्रैः शृतं हविः ।
अपस्मार-ज्वरोन्माद-कामलान्तकरं पिबेत् ॥ ११ ॥

---

स्यात् । अत्र च वक्त्रग्रहणेनैवाक्षिग्रहणे सिद्धेऽक्षिग्रहणमतिशयार्थम् । तथाऽऽस्फालयति मेदिनीमित्यादि च स्यात् । कफाच्चिरेणेति । कफाच्चिरेण कालेन ग्रहणम् । चिरेणैव विबोधनं मोक्षणं स्यात् । चेष्टाल्पेत्यादि च । सर्व्वलिङ्गमिति । सर्व्वलिङ्गमपस्मारं वर्ज्जयेन्नोपक्रमेत् । अथेति । अथैवमपस्मारस्वरूपमवगत्य धी-चित्तहृदयस्रोतसां पूर्व्वं प्रबोधनं कुर्य्यात् । कैः ? वमनादिभिस्तीक्ष्णैः कर्म्मभिः ॥ ५—८ ॥

वातिकमिति । वातिकमपस्मारं बस्तिप्रायैरुपाचरेत् । पैत्तिकं प्रायो विरेचनैः । श्लैष्मिकन्तु वमनप्रायैरुपाचरेत् । सर्व्वतस्त्विति । सर्व्वतोऽध उपरिष्टाच्च विशुद्धस्य तथा सम्यगाश्वासितस्य च कृतपेयाद्यन्नसंसर्गिकस्य च सम्यगाश्वासनं सम्पद्यते । तस्यापस्मारिणोऽपस्मारविशोधनाय वक्ष्यमाणानिमान् योगानाकर्णय ; तानेवाह,-गोमयेति । गोमयस्वरसादिभिघृतं पक्वमपस्मारादिघ्नं पिबेत् ॥ ९—११ ॥

द्विपञ्चमूली-त्रिफला-द्विनिशा-कुटजत्वचः ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम ॥
शम्पाक-पुष्करजटा-फल्गु मूल-दुरालभाः ।
द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गी-पाठाढ़की-कुम्भ-निकुम्भ-व्योष-रोहिषैः ।
मूर्व्वा-भूतिक-भूनिम्ब-श्रेयसीसारिवाद्वयैः ॥
मदयन्त्यग्निनिचुलैरचांशैः सर्पिषः पचत् ।
प्रस्थं तद्वद् द्रवैः पूर्व्वैः पञ्चगव्यमिदं महत् ॥
ज्वरापस्मार-जठर-भगन्दरहरं परम् ।
शोफार्शःकामलापाण्डु-गुल्म-कास-ग्रहापहम् ॥ १२ ॥
ब्राह्मी-रस-वचा-कुष्ठ-शङ्खपुष्पी-शृतं घृतम् ।
पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ॥ १३ ॥
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविमोक्षणम् ॥ १४ ॥
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ।
कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ।
वातपित्तोद्भवं क्षिप्रमपस्मारं निहन्ति तत् ॥ १५ ॥

---

द्विपञ्चेति । द्विपञ्चमूलादीनि पृथग् द्विपलप्रमाणानि जलद्रोणे पक्त्वा पादावशेषिते क्वाथे भार्ग्यादिभिः कर्षांशैः कल्कीकृतैस्तस्य प्रस्थं तद्वत् पूर्व्वैर्गोमयस्वरसादिभिर्द्रवैः पाचयेत् । महदिदं पञ्चगव्यं परं ज्वरादिहरं । शोफादिघ्नञ्च । बहुद्रव्ययोगाच्चास्य महत्त्वं यथा महाकल्याणकादिः ॥ १२ ॥

ब्राह्मीति । ब्राह्म्यादिभिः पुराणं सपिः पक्वं मेध्यमुन्मादादिजित् । तैलप्रस्थमिति । तैलप्रस्थं घृतप्रस्थं जीवनीयैरजीकृतैः पलप्रमाणैः क्षीरद्रोणे पचेत् । तत्सिद्धमपस्मारविमोक्षणम् । कंस इति । क्षीरेक्षुरसयोः कंस आढ़के तथा काश्मर्यरसेऽष्टगुणेऽष्टप्रस्थपरिमाणे घृतादस्याष्टगुणत्वं, जीवनीयैः कार्षिकैर्घृतप्रस्थं विपाचयेत् । तद्वातपित्तजमपस्मारं शीघ्रमेव निहन्ति । ननु द्वन्द्वजस्यापस्मारस्यासम्भवात् कथमुक्तं वातपित्तोद्भवं हन्ति ? इत्युच्यते । वातपित्तोत्थयोर्द्वयोरप्यपस्मारयोर्हन्त्रीत्येतदिहोक्तमित्यदोषः ॥ १३—१५ ॥

तद्वत् काश-विदारीक्षु-कुश-क्वाथशृतं पयः ॥ १६ ॥
कुष्माण्डस्वरसे सर्पिरष्टादशगुणे शृतम्।
यष्टीकल्कमपस्मारहरं धी-वाक्स्वरप्रदम् ॥ १७ ॥
कपिलानां गवां पित्तं नावनं परमं हितम्।
श्व-शृगाल-विड़ालानां सिंहादीनाञ्च पूजितम् ॥ १८ ॥
गोधा-नकुल-नागानां वृषभर्क्षगवामपि।
पित्तेषु साधितं तैलं नस्येऽभ्यङ्गे च शस्यते ॥ १९ ॥
त्रिफला-व्योष-पीतद्रु-यवक्षार-फणिज्जकैः।
श्यामापामार्ग-करञ्जबीजैस्तैलं विपाचितम्।
बस्तमूत्रे हितं नस्यं चूर्णं वाध्मापयेद्भिषक् ॥ २० ॥
नकुलोलूक-मार्ज्जार-गृध्र-कीटाहि-काकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूममस्य प्रयोजयेत् ॥ २१ ॥
शीलयेत्तैललशुनं पयसा वा शतावरीम्।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ २२ ॥
समं क्रुद्धैरपस्मारो दोषैः शारीरमानसैः।
यज्जायते यतश्चैष महामर्म्मसमाश्रयः ॥
तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत्।
तदार्त्तञ्चाग्नितोयादेर्विषमात् पालयेत् सदा ॥ २३ ॥

---

तद्वदिति। तद्वत् पूर्व्ववत् काशादिक्वाथे शृतं क्षीरं स्यात्। कुष्माण्डेति। कुष्माण्डस्वरसेऽष्टादशगुणे मधुयष्टिकाकल्कं घृतप्रस्थं पक्वमपस्मारजिद् बुद्ध्यादिप्रदञ्च। कपिलानामिति। कपिलानां गवां पित्तं नस्यं सुष्ठु हितम् न कृष्णानां गवां अचिन्त्यत्वात् प्रभावस्य। श्वादीनामपि पित्तं हितम्। गोधेति। गोधादीनाञ्च पित्तेषु साधितं तैलं नस्येऽभ्यङ्गे च शस्यते। त्रिफलेति। त्रिफलादिभिः कल्कितैश्छागमूत्रे चतुर्गुणे साधितं तैलं नस्यमुन्मादापस्मारिणोर्हितम्। चूर्णं त्रिफलादेर्वा वैद्यो नासाया मध्येऽऽध्मापयेत् ॥ १६—२० ॥

नकुलेति। नकुलादीनां यथासम्भवं तुण्डादिभिरपस्मारिणो धूमं योजयेत्। शीलयेदिति। तथा तैललशुनं शीलयेत्। क्षीरेण श[illegible]ावरीमद्यात्। ब्राह्मीरसं वा कुष्ठरसं मधुना समभ्यसेद्वचां वा। सममिति। [illegible]स्मादपस्मारो युगपत्

मुक्तं मनोविकारेण त्वमित्थं क्षतवानिति ।
न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥ २४ ॥

इत्यष्टाङ्गहृदये भूततन्त्रेऽपस्मारप्रतिषेधो नाम
सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

अथातो वर्त्मरोगविज्ञानमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

सर्व्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।
अचक्षुष्यैर्व्विशेषेण प्रायः पित्तानुसारिणः ॥
शिराभिरूर्द्धं प्रसृता नेत्रावयवमाश्रिताः ।
वर्त्मसन्धिं सितं कृष्णं दृष्टिं वा सर्व्वमक्षि वा ॥

---

प्रकोपितैः शरीरमानसैर्दोषैर्जायते यतश्चैष महामर्माश्रयस्तत एनमपस्मारं दुश्चिकित्स्यं रसायनैरुपाचरेत् । अपस्मारार्त्तञ्चाग्निजलादेर्व्विषमात् सदा पालयेत् । मुक्तमिति । मनोविकारेण च मुक्तं सन्तं त्वमित्थं क्षतवानिति न ब्रूयात् । अस्य च मनःक्लिष्टमिष्टैर्व्विषयैरुपबृंहयेत् ॥ २१—२४ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां
सर्व्वाङ्गसुन्दराख्यायामुत्तरस्थानेऽपस्मारप्रतिषेधो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अपस्मारादनन्तरं शालाक्यमुपक्रम्यते । यथैव हृदयाख्यमहामर्म्माश्रितैरपस्मारो जन्यते तथैव मूर्द्धाख्यमहामर्म्माश्रितैरूर्द्ध्वजत्रुत्था रोगा जन्यन्ते । तेषामपि च मध्येऽक्षिरोगाणां प्राधान्यात् पूर्व्वमुपन्यास इत्याह,—अथात इति । वर्त्मनि रोगा वर्त्मरोगाः । कृच्छ्रोन्मीलनादयः । तेषां विज्ञानमवबोधः । स विद्यते यस्मिन्निति छस्तस्य पूर्व्ववल्लुक् । सर्व्वरोगेति । सर्व्वरोगनिदानेऽप्युक्तान्यभिहितानि यथायोगं तिक्तोषणादीनि तैराहारविहारैः प्रकुपिता मला रोगान् कुर्य्युः । विशेषादचक्षुष्यैराहारविहारैः कुपिता मलाः प्रायो बाहुल्येन पित्तानुसारिणस्तथा शिराभिः करणभूताभिरूर्द्ध्वं

रोगान् कुर्य्युश्चलस्तत्र प्राप्य वर्त्माश्रयाः शिराः ।
सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम् ॥
पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ।
विमर्दनात् स्याच्च शमः कृच्छ्रोन्मीलं वदन्ति तम् ॥ २ ॥
चालयन् वर्त्मनो वायुर्निमेषोन्मेषणं मुहुः ।
करोत्यरुङ्‌निमेषोऽसौ वर्त्म यत्तु निमील्यते ।
विमुक्तसन्धि निश्चेष्टं हीनं वातहतं हि तत् ॥ ३ ॥
कृष्णाः पित्तेन बह्व्योऽन्तर्व्वर्त्म कुम्भीकबीजवत् ।
आध्मायन्ते पुनर्भिन्नाः पिटिकाः कुम्भिसंज्ञिताः ॥ ४ ॥
सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाच्चभम् ।
पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत् ॥ ५ ॥
करोति कण्डुं दाहञ्च पित्तं पक्ष्मान्तमास्थितम् ।
पक्ष्मणां शातनञ्चानु पक्ष्मशातं वदन्ति तम ॥ ६ ॥

---

अनुगः प्रस्तुतास्तथा नेत्रस्य सम्बन्धिनमवयवं वक्ष्यमाणं वर्त्मादिकमाश्रिताः। वर्त्मेत्यादि। वा शब्दः प्रत्येकं युज्यते। वर्त्म वा सन्धिं वा सितं वाऽसितं वा दृष्टिं वा सकललोचनमाश्रिता इति सामान्येन नयनरोगाणां सम्प्राप्तिः। सुप्तोत्थितस्येति। तत्र तेषु वर्त्माद्याश्रितेषु मध्ये वर्त्माश्रयाः शिरा वायुः प्राप्य सुप्तोत्थितस्य नरस्य वर्त्मस्तम्भं कुरुते रुजया सह। तथा पांशुपूर्णाभनयनत्वं कृच्छ्रेणोन्मीलनमश्रु च कुरुते। विमर्द्दनान्मलनाच्च शमः स्यात्। तमीदृकस्वरूपं कृच्छ्रोन्मीलाख्यं नेत्ररोगं वदन्ति ॥ १—२ ॥

चालयन्निति। वायुर्वर्त्मनी चालयन् निमेषोन्मेषणं पीड़ारहितं पुनः पुनः करोति। असौ निमेषाख्यो रोगो ज्ञेयः। वर्त्मेति। यत् पुनर्वर्त्म विमुक्तसन्धि तथा निश्चेष्टं हीनञ्च निमील्यते तं वातहताख्यं रोगं वदन्ति मुनय इति शेषः। कृष्णा इति। पित्तेन कृष्णवर्णाभाः पिटिका बह्व्यो वर्त्मनोर्मध्ये कुम्भीकबीजतुल्यास्तथा भिन्नाः सत्यः पुनराध्मायन्ते ताः कुम्भीसंज्ञाः। सदाहेति। पित्तेन सदाहक्लेदनिस्तोदं तथा रक्ताकारं स्पर्शनाच्चभं वर्त्म जायते तत् पित्तोत्क्लिष्टमुशन्ति कथयन्ति। करोतीति। पित्तं पक्ष्मान्तमास्थितं कण्डूं दाहञ्च करोति। अनु पश्चात् पक्ष्मशातं करोति। तं पक्ष्मशातं वर्णयन्ति ॥ ३—६ ॥

पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात्।
शोफोपदेह-रुक्कण्डूपिच्छिलाश्रुसमन्विताः ॥ ७ ॥
कफोत्क्लिष्टं भवेद्वर्त्म स्तम्भक्लेदोपदेहवत् ॥ ८ ॥
ग्रन्थिः पाण्डुररुक्पाकः कण्डूमान् कठिनः कफात्।
कोलमात्रः स लगणः किञ्चिदल्पस्ततोऽपि वा ॥ ९ ॥
रक्ता रक्तेन पिटिकास्तत्तुल्यपिटिकाचिताः।
उत्सङ्गाख्यास्तयोत्क्लिष्टं राजिमत् स्पर्शनाक्षमम् ॥ १० ॥
अर्शोऽधिमांसं वर्त्मान्तः स्तब्धं स्निग्धं सदाहरुक्।
रक्तं रक्तेन तत् स्रावि छिन्नं छिन्नञ्च वर्द्धते ॥ ११ ॥
मध्ये वा वर्त्मनोऽन्ते वा कण्डूषारुग्वती स्थिरा।
मुद्गमात्रासृजा ताम्रा पिटिकाञ्जननामिका ॥ १२ ॥
दोषैर्वर्त्म बहिः शूनं यदन्तः सूक्ष्मखाचितम्।
सस्रावमन्तरुदकबिसाभं बिसवर्त्म तत् ॥ १३ ॥
यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात्।
रक्तदोषत्रयोत्क्लेशाद् वदन्त्युत्क्लिष्टवर्त्म तत् ॥ १४ ॥

---

पोथक्य इति। कफात् पिटिकाः श्वेताः सर्षपोपमा घना निबिड़ाः शोफादियुताः पोथकीसंज्ञाः। कफेति। स्तम्भादियुतं वर्त्म यद्भवेत् तत् कफोत्क्लिष्टं नाम। ग्रन्थिरिति। कफाद यो ग्रन्थिः कोलमात्रोऽथवा तत्कोलात् किञ्चिदल्पः पाण्डुः पीड़ापाकरहितः कण्डूमान् कठिनश्च स्यात् स लगणाख्यः। रक्तेति। रक्तेन रक्तवर्णाः पिटिकास्तत्तुल्यपिटिकैराचिता उत्सङ्गाख्याः। तथेति। तथोत्सङ्गवदुत्क्लिष्टाख्यं वर्त्म; तच्च पिटिकारूपं; किं तर्हि? राजियुतं स्पर्शनाक्षमञ्च स्यात्। अर्श इति। अधिकमांसञ्च वर्त्माभ्यन्तरस्थितमर्शो नाम रक्तेन स्यात्। रक्तं वर्णतस्तथा स्तब्धतादिगुणं स्यात्। तथा तत्स्रावि तद्रक्तं स्रवत्यभीक्ष्णं पुनः पुनश्छिन्नमपि वर्द्धते ॥ ७—११ ॥

मध्य इति। असृजा ताम्रा पिटिका मुद्गप्रमाणा वर्त्मनो मध्येऽन्ते वा कण्ड्वादिमती स्थिराञ्जननामिका स्यात्। दोषैरिति। दोषैर्वातादिभिर्बहिः शूनं यद्वर्त्म सूक्ष्मैः खैश्छिद्रैरन्तराचितं सस्रावञ्च तद्विसवर्त्म उदकान्तस्थितसच्छिद्रविसतुल्यत्वात्। यदिति। यद्वर्त्म रक्तोत्क्लेशाद्दोषत्रयोत्क्लेशाच्च ह्युत्क्लिष्टमुत्क्लिष्टं

श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत् ॥ १५ ॥
श्लिष्टा * ख्यवर्त्मनो श्लिष्टे कण्डूश्वयथुरागिणो ॥ १६ ॥
वर्त्मनोऽन्तः खरा रूक्षाः पिटिकाः सिकतोपमाः ।
सिकतावर्त्म कृष्णन्तु कर्द्दमं कर्द्दमोपमम् ॥ १७ ॥
बहलं बहलैर्मांसैः सवर्णैश्चीयते समैः ॥ १८ ॥
कुकूणकः शिशोरेव दन्तोत्पत्तिनिमित्तजः ।
स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ।
स वर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्द्दनः ॥ १९ ॥
पक्ष्मोपरोधे सङ्कोचो वर्त्मनां जायते तथा ।
खरतान्तर्मुखत्वञ्च लोम्नामन्यानि वा पुनः ॥
कण्टकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि शूयते ।
उष्यते चानिलादिद्विड़ल्पाहः शान्तिरुद्धृतैः ॥ २० ॥
कनीनके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः ।
ताम्रः पक्वोऽस्रपूयस्रुदलज्याध्मायते मुहुः ॥ २१ ॥

* क्लिष्टेति वा पाठः ।

सदकस्माद्द हेतुं विनैव स्नानिमियाक्कुष्मात्वं यायात् तदुक्लिष्टं वर्त्म स्यात् । श्यावेति । रक्तसहितैस्त्रिमलैर्यद्वर्त्म श्यावं रुजोत्क्लेदेन शोफेन च युक्तं भवति तच्छ्याववर्त्म । श्लिष्टेति । श्लिष्ट एकत्र संलग्ने वर्त्मनो कण्ड्वादियुते श्लिष्टवर्त्मनी नाम । वर्त्मनो मध्ये बालुकातुल्याः पिटिकाः खरस्पर्शास्तथा रूक्षास्तत् सिकतावर्त्म । कर्द्दमसदृशं कृष्णं वर्त्म कर्द्दमाख्यम् । बहलमिति । बहलैर्घनैर्मांसैः सवर्णैः समैर्न विषमैश्चीयते तद्बहलं नाम ॥ १२—१८ ॥

कुकूणक इति । कुकूणकः शिशोरेव न महती जायते । यतोऽसौ दन्तोत्पत्तिहेतुको-भवति । तेन कुकूणकेन बाल उच्छूनताम्रनयनो वीक्षणाक्षमस्तथा वर्त्मशूलादिमान् कर्णादिमर्द्दनश्च स्यात् । पक्ष्मोपरोध इति । पक्ष्मोपरोधे वर्त्मनां सङ्कोचो भवति । तथा खरत्वमन्तर्मुखत्वञ्च रोम्नामन्यानि वा रोमाणि जायन्त । तैः खरान्तर्मुखै-रपूर्व्वैर्वा रोगस्वभावात्तीक्ष्णाग्रैः कण्टकैरिव घृष्टमक्षि शूयते । उष्यते च सान्तर्दाह-स्तोद्भ्रोषा स्यादित्यर्थः । तथा पवनादिद्विट् । आदिशब्देनानलातपौ गृह्येते । स्तोकान्यहान्युद्धृतैरुत्पाटितैस्तैः शान्तिर्भवति ॥ १९—२० ॥

वर्त्मान्तर्मांसपिण्डाभः श्वयथुर्ग्रथितोऽरुजः ।
सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥ २२ ॥
चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः ॥ २३ ॥
आद्योऽत्र भेषजैः साध्यो द्वौ ततोऽर्शश्च वर्जयेत् ।
पक्ष्मोपरोधो याप्यः स्याच्छेषांश्छस्त्रेण साधयेत् ॥ २४ ॥
कुट्टयेत् पक्ष्मसदनं छिन्द्यात्तेष्वपि चार्बुदम् ।
भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः ॥
पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयम् ।
सकर्दमं सबहलं विलिखेत् सकुकूणकम् ॥ २५ ॥

इत्युत्तरस्थाने शालाक्यतन्त्रे वर्त्मरोगविज्ञानीयो
नामाष्टमोऽध्यायः ॥ ८ ॥

---

कनीनक इति । कनीनके वर्त्मनोर्वाह्यतः कठिन उन्नतो ग्रन्थिरलजीत्युच्यते । किम्भूतो ग्रन्थिः । ताम्रः पक्वश्चास्रस्रावी पूयस्रावी च । तथा च मुहुःस्रुतः सन्नाध्मायते । वर्त्मेति । वर्त्मनोऽन्तरे मांसपिण्डाकृतिः श्वयथुः सरक्तैस्त्रिभिर्दोषैरर्बुदः स्यात् । किम्भूतः ? श्वयथुग्रथितो नीरुजः स च बाह्यतश्चलो विषमश्च स्यात् । चतुर्विंशतिरिति । इत्येतेन प्रकारेण चतुर्विंशतिसंख्यका वर्त्माश्रया रोगाः ॥ २१-२३ ॥

आद्य इति । एषु मध्यादाद्यः कृच्छ्रोन्मीलनाख्यो भेषजैः साध्यः । ततोऽनन्तरं द्वौ निमिषवातहतार्शश्च वर्जयेत् । पक्ष्मरोधो याप्यः । शेषानेकोनविंशतिं शस्त्रेणोपचरेत् । कुट्टयेदिति । तेष्वपि शस्त्रसाध्येषु मध्ये पक्ष्मसदनं कुट्टयेत् सूचीकूर्चेन । अर्बुदं छिन्द्याद् वृद्धिपत्रादिना । लगणादीनि व्रीहिमुखेन भिन्द्यात् । पोथक्यादयः कुकूणकान्ता एकादश विलेख्याः । उत्क्लिष्टचतुष्टयं पित्तोत्क्लिष्टं कफोत्क्लिष्टं रक्तोत्क्लिष्टमुत्क्लिष्टवर्त्म च ॥ २४—२५ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने वर्त्मरोगविज्ञानीयो नामाष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः ।

——:०:——

अथातो वर्त्मरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्काम्बुसाधितम् ।
ससितं योजयेत् स्निग्धं नस्यधूमाञ्जनादि च ॥ २ ॥

कुम्भीकावर्त्म लिखितं सैन्धवप्रतिसारितम् ।
यष्टी-धात्री-पटोलीनां क्वाथेन परिषेचयेत् ॥ ३ ॥

निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।
बहिःकोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा ॥

निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम् ।
न स्रंसते चलति वा वर्त्मैवं सर्व्वतस्ततः ॥

मण्डलाग्रेण तत्तिर्य्यक् कृत्वा शस्त्रपदाङ्कितम् ।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥

फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ।
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥

---

वर्त्मरोगविज्ञानादनन्तरं वर्त्मरोगप्रतिषेधमारभ्यते । इत्याह,—अथात इति । कृच्छ्रोन्मीले वर्त्मरोगे पुराणं घृतं द्राक्षाकल्काम्बुसाधितं पक्वं समशर्करं योजयेत् । स्निग्धं नस्यादिकम् । कुम्भीकावर्त्मरोगोपक्रममाह,—कुम्भीति । कुम्भीकावर्त्म विलिखितं वृद्धिपत्रादिना सैन्धवलवणेन प्रतिसारितं सत् मधुयष्टिकादिक्वाथेन परिषेचयेत् ॥ १—३ ॥

कथं वर्त्म विलेखनीयमित्याह,—निवात इति । निवाते स्थाने आप्तैरधिष्ठितस्य कृताश्रयस्य तथा शुद्धस्य वमनविरेचनादिना उत्तानं नित्यं शेते तस्य वर्त्म वाससा कोष्णाम्बुना तप्तेन स्वेदितं सन्निर्भुज्य कुटिलीकृत्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीभ्यां धृतमेवं न स्रंसते न वा चलति सर्व्वतः । अनन्तरं तद्वर्त्म तिर्य्यङ्मण्डलाग्रेण शस्त्रपदाङ्कितं कृत्वा तेनैव शस्त्रेण शाकादिपत्रैर्वा समुद्रफेनेन वा लिखेत् । किं कुर्व्वन् ? पिचुना कर्पटादियोजितेन रक्तं प्रमृजन् । रक्ते स्थितेऽवहृते सुलिखितं तद्वर्त्म ज्ञात्वा सक्षौद्रैर्यथास्वङ्घृष्टैः सैन्धवादिभिः प्रतिसारयेत् । पश्चाच्चोष्णेन वारिणा प्रक्षाल्य सर्पिषा सिक्तमनन्तरमभ्यक्तं मधुसर्पिषा स्थूलूर्द्धः कर्षयीर्यवसक्तुभिः पिण्डीं कृत्वा

यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा।
घृतेन सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा॥
ऊर्द्ध्वाधः कर्णयोर्दत्त्वा पिण्डीश्च यवसक्तुभिः।
द्वितीयेऽहनि मुक्तस्य परिषेकं यथायथम्।
कुर्य्यात् चतुर्थे नस्यादीन्मुञ्चेदेवाह्नि पञ्चमे॥ ४॥
समं नखनिभं शोफ-कण्डू-घर्षाद्य-पीड़ितम्।
विद्यात् सुलिखितं वर्त्म लिखेद् भूयो विपर्य्यये॥ ५॥
रुक्पक्ष्म-वर्त्मसदनं स्रंसनादतिलेखनात्।
स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः॥ ६॥
अभ्यज्य नवनीतेन श्वेतरोध्रं प्रलेपयेत्।
एरण्डमूलकल्केन पुटपाके पचेत्ततः॥
स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतम्।
स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनम्॥ ७॥
शालितण्डुलकल्केन लिप्तं तद्वत्परिष्कृतम्।
कुर्य्यान्नेत्रेऽतिलिखिते मृदितं दधिमस्तुना।
केवलेनापि वा सेकं मस्तुना जाङ्गलाशिनः॥ ८॥

---

बध्नीयात्। द्वितीये दिवसे मुक्तस्य वर्त्मनी यथास्वं परिषेकं कुर्य्यात्। चतुर्थे दिवसे नस्यादीन् कुर्य्यात्। पञ्चमे दिवसे मुञ्चेदेव नान्यत् किञ्चित् कुर्य्यात्॥ ४॥

सममिति। समं नखसदृशं शोफाद्यपीड़ितं सुलिखितं वर्त्म जानीयात्। विपर्य्ययेऽस्माल्लक्षणाद्वैपरीत्ये सति तद्वर्त्म पुनर्लिखेत्। रुगिति। अतिलेखनाद्रुजादीनि स्युः। तस्मिन्नतिलिखने स्नेहस्वेदादिको वातघ्नो विधिः कार्य्यः। अभ्यज्येति। श्वेतरोध्रं नवनीतेनाभ्यज्य एरण्डमूलकल्केन प्रलेपयेत्। अनन्तरं पुटपाके पचेत्। स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतं सद् युवतीक्षीरेण छगल्या वा क्षीरेण मृदितं नेत्रसेचनं हितम्॥ ५—७॥

शालीति। अतिलिखिते वर्त्मनि नवनीतेनाक्तं श्वेतरोध्रं शालितण्डुलकल्केन लिप्तं वस्त्रं परिष्कृतम्, पूर्ववत्परिकल्पितं पुटपाकीकृतं स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतञ्चेत्यर्थः। दधिमस्तुना मृदितं सेकं कुर्य्यात्। दधिग्रहणं तक्रमस्त्वादिनिवृत्त्यै अथवा केवलेन कल्करोध्ररहितेन मस्तुना जाङ्गलमांसाशिनो नरस्य सेकं कुर्य्यात्। अपि स्वेदनपाचनसमुदायविकल्पार्थः॥ ८॥

पिटिकां व्रीहिवक्त्रेण भित्त्वा तु कठिनोन्नताम्।
निष्पीड़येदनु विधिः परिशेषस्तु पूर्व्ववत्॥ ९॥
लेखने भेदने चायं क्रमः सर्व्वत्र वर्त्मनि॥ १०॥
पित्तास्रोत्क्लिष्टयोः स्वादुस्कन्धसिद्धेन सर्पिषा।
शिराविमोक्षः स्निग्धस्य त्रिवृच्छ्रेष्ठं विरेचनम्॥
लिखिते स्रुतरक्ते च वर्त्मनि क्षालनं हितम्।
यष्टीकषायैः सेकस्तु क्षीरं चन्दनसाधितम्॥ ११॥
पक्ष्मणां सदने सूच्या रोमकूपान् विकुट्टयेत्।
ग्राहयेद्वा जलौकोभिः पयसेक्षुरसेन वा।
वमनं नावनं सर्पिः शृतं मधुरशीतलैः॥ १२॥
सञ्चूर्ण्य पुष्पकासीसं भावयेत् सुरसारसैः।
ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम्॥ १३॥
पोथकीर्लिखिताः शुण्ठीसैन्धवप्रतिसारिताः।
उष्णाम्बुक्षालिताः सिञ्चेत् खदिराढ़किशिग्रुभिः।
अप्सिद्धैर्द्विनिशा-श्रेष्ठा-मधुकैर्वा समाक्षिकैः॥ १४॥

---

पिटिकामिति। कठिनोन्नतां पिटिकां व्रीहिवक्त्रेण भित्त्वाऽनु। निष्पीड़येत्। परिशेषोऽपि विधिः प्रलेपन-बन्धन-क्षालन-सेचनादिः पूर्व्ववत्कार्य्यः। लेखन इति। लेखने भेदने च एष एव क्रमः सर्व्वत्र वर्त्मनि कार्य्यः। पित्तेति। पित्तोत्क्लिष्टे रक्तोत्क्लिष्टे च मधुरस्कन्धशृतेन घृतेन स्निग्धस्य पुंसः शिराविमोक्षः कार्य्यः। तथा त्रिवृतात्रिफला-विरेचनम्। लिखिते स्रुतरक्ते च वर्त्मनि क्षालनं हितम्। लिखित वर्त्मनि स्रुतरक्ते सति मधुयष्टिकाक्वाथः क्षालने हितः। क्षीरं चन्दनसाधितन्तु सेके हितम्॥ ९—११॥

पक्ष्मणामिति। पक्ष्मणां सदने सति रोमकूपान् रोममूलानि सूच्या विकुट्टयेत्। जलौकोभिर्वा ग्राहयेत्। क्षीरेणेक्षुरसेन वा वमनं हितम्। मधुरशीतलैर्द्राक्षादिभिः पक्वं घृतं नावनं हितम्। सञ्चूर्ण्येति। पुष्पकासीसं सञ्चूर्णयित्वा ताम्रपात्रे दशाहं सुरसारसैः सम्पूर्व्वारसैर्भावयेत्। तदेतत्पक्ष्मशाते श्रेष्ठमञ्जनम्। पोथकीरिति। पोथकीर्लिखिता वृन्ताकपत्रादिभिः शुण्ठीसैन्धवाभ्यां प्रतिसारितास्तथोष्णाम्बुना क्षालिता जलक्वथितैः खदिरादिभिः सिञ्चेत्। द्वि-निशादिभिर्वा जलक्वथितैः समाक्षिकैः सिञ्चेत्॥ १२—१४॥

कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारणम् ।
सूक्ष्मैः सैन्धव-कासीस-मनोह्वा-कण-तार्क्ष्यजैः ।
वमनाञ्जन-नस्यादि सर्व्वञ्च कफजिद्धितम् ॥ १५ ॥
कर्त्तव्यं लगणेऽप्येतद्दशान्तावग्निना दहेत् ॥ १६ ॥
कुकूणे खदिर-श्रेष्ठा-निम्बपत्रैः शृतं घृतम् ।
पीत्वा धात्री वमेत् कृष्णा-यष्टी-सर्षप-सैन्धवैः ॥ १७ ॥
अभया-पिप्पली-द्राक्षा-क्वाथेनैनां विरेचयेत् ॥ १८ ॥
मुस्ता-द्विरजनी-कृष्णा-कल्केनालेपयेत् स्तनौ ।
धूपयेत्सर्षपैः साज्यैः शुद्धां क्वाथं च पाययेत् ।
पटोल-मुस्त-मृद्वीका-गुडूची-त्रिफलोद्भवम् ॥ १९ ॥
शिशोस्तु लिखितं वर्त्म स्रुतासृग्वाम्बुजन्मभिः ।
धात्र्यश्मन्तक-जम्बूत्थ-पत्रक्वाथेन सेचयेत् ॥ २० ॥
प्रायः क्षीरघृताशित्वाद् बालानां श्लेष्मजा गदाः ।
तस्माद्वमनमेवाग्रे सर्व्वव्याधिषु पूजितम् ॥ २१ ॥
सिन्धूत्थ-कृष्णापामार्ग-बीजाज्य-स्तन्य-माक्षिकम् ।
चूर्णो वचायाः सक्षौद्रो मदनं मधुकान्वितम् ॥
क्षीरं क्षीरान्नमन्नं च भजतः क्रमशः शिशोः ।
वमनं सर्व्वरोगेषु विशेषेण कुकूणके ॥ २२ ॥

---

कफोत्क्लिष्ट इति । कफोत्क्लिष्टे वर्त्मनि शस्त्रेण विलिखिते सैन्धवादिभिः सूक्ष्मरजीकृतैर्माक्षिकसहितैः प्रतिसारणं हितम् ; तथा वमनादि हितं । सर्व्वञ्च यत्कफजित्तच्च हितम् । कर्त्तव्यमिति । लगणेऽपीदं कार्य्यमेवमप्यशमे सति ज्वलनेन दहेत् । कुकूण इति । कुकूणे खदिरादिभिः पक्वं घृतं धात्री स्तनदायिनी पीत्वा कृष्णादिभिर्वमेत् । अभयेति । अभयादिक्वाथेनैनां स्तनदायिनीं विरेचयेत् । मुस्तेति । मुस्तादिकल्केन कुचावालेपयेत् । साज्यैः सर्षपैः स्तनौ धूपयेत् । पटोलेति । शुद्धाञ्च वमनविरेचनादिना पटोलादिकं क्वाथं ताञ्च पाययेत् । शिशोरिति । शिशोः पुनर्वर्त्म लिखितं जलौकोभिर्वा स्रुतरक्तं धात्र्यादिपत्रक्वाथेन सेचयेत् ॥ १५—२० ॥

प्राय इति । प्रायो बाहुल्येन क्षीरघृतभोजनत्वाच्छिशूनां कफजा रोगाः स्युः । तस्माद्वमनमेव पूर्व्वं तेषां सर्व्वव्याधिषु पूजितम् । तदेव वमनमाह,—सिन्धूत्थेति ।

सप्तला-रससिद्धाज्यं योज्यं चोभयशोधनम् ॥ २३ ॥
द्विनिशा-रोध्र-यष्ट्याह्व-रोहिणी-निम्बपल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोऽन्वितैः ।
चीर-चौद्र-घृतोपेतं दग्धं वा लोहितं रजः ॥ २४ ॥
एला-रसोन-कतक-शङ्खोषण-फणिज्झकैः ।
वर्त्तिः कुकूणपोथक्योः सुरापिष्टैः सकट्फलैः ॥ २५ ॥
पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ।
उत्सृज्य द्वौ भ्रुवोऽधस्ताद्भागौ भागं च पक्ष्मतः ॥
यवमात्रं यवाकारं तिर्य्यक् छित्त्वाऽऽर्द्रवाससा ।
अपनेयमसृक् तस्मिन्नल्पी भवति शोणितम् ॥
सीव्येत् कुटिलया सूच्या मुद्गमात्रान्तरैः पदैः ।
बद्ध्वा ललाटे पट्टं च तत्र सीवनसूत्रकम् ।
नातिगाढ़श्लथं सूच्या निक्षिपेदथ योजयेत् ॥
मधुसर्पिःकवलिकां न चास्मिन् बन्धमाचरेत् ।
न्यग्रोधादिकषायैश्च सक्षीरैः सेचयेद्रुजि ॥
पञ्चमे दिवसे सूत्रमपनीयावचूर्णयेत् ।
गैरिकेण व्रणं युञ्ज्याच्चोक्ष्णं नस्याञ्जनादि च ॥ २६ ॥

---

सिन्धूत्थेत्यादिवमनं दद्यात् ; वचाचूर्णः सक्षौद्रो वा ; मदनफलं मधुयष्टीयुक्तं वा । क्षीरं क्षीरान्नं तथाऽन्नं भजतः शिशोर्यथाक्रमेण वमनत्रयमेव योज्यम् । वमनं सर्व्वेष्वेवामयेषु शिशोः श्रेष्ठम् । विशेषेण कुकूणके हितम् । सप्तलारसेति । सप्तलारसेन वा सिद्धं घृतमूर्द्ध्वाधः शोधनं हितम् । द्विनिशेति । कुकूणके द्विहरिद्रादिभिस्ताम्रचूर्णयुक्तैर्जलपिष्टैर्वर्त्तिर्हिता । क्षीरादियुक्तं दग्धं लोहोत्थितं चूर्णं हितम् । केचित्तु समुद्रफेनचूर्णं दग्धं दुग्धमाक्षिकमित्याहुः । एलेति । एलादिभिः कटफलयुक्तैः कुकूणपोथक्योः सुरापिष्टैर्वर्त्तिर्हिता ॥ २१—२५ ॥

पक्ष्मरोध इति । पक्ष्मरोधे रोमसु प्रकर्षेण वृद्धेषु शुद्धशरीरस्य नरस्य भ्रुवोरधस्ताद्द्वौ भागावुत्सृज्य विहाय पक्ष्मतो भागं हित्वा यवमात्रं यवसंस्थानं तिर्य्यक् छित्त्वा क्लिन्नवस्त्रेण रक्तमपनयेत् । रक्ते चाल्पीभवति सति वक्रया सूच्या मुद्गमात्रान्तरैः पदैः सीव्येत् । ततो ललाटे पट्टं बद्ध्वा तत्र च पट्टं सीवनसूत्रकं नातिगाढ़श्लथं सूच्या विनिक्षिपेत् । अनन्तरं माक्षिकघृतकवलिकां योजयेत् । न चात्र बन्धं कुर्य्यात् ।

दहेदशान्तौ निभुज्य वर्त्म दोषाश्रयां बलीम् ।
सन्दंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥
सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजेः पुनः ।
भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥ २७ ॥

इत्यष्टाङ्गहृदये शालाक्यतन्त्रे वर्त्मरोगप्रतिषेधो
नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

अथातः सन्धिसितासितरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

वायुः क्रुद्धः शिराः प्राप्य जलाभं जलवाहिनीः ।
अश्रु स्रावयते वर्त्म शुक्लसन्धेः कनीनकात् ।
तेन नेत्रं सरुग्रागशोफं स्यात् स जलस्रवः ॥ २ ॥

---

पीड़ायां सत्यां न्यग्रोधादिकषायैः क्षीरयुतैः सेचयेत् । पञ्चमे दिवसे सूत्रमपनीय व्रणं गैरिकेणावचूर्णयेत् । तीक्ष्णञ्च नस्यादि युञ्ज्यात् ॥ २६ ॥

दहेदिति । एवमप्यशान्तौ वर्त्म दोषाश्रयां बलीं निर्भुज्य दहेत् । अधिकं पक्ष्म संदंशेन हृत्वा तस्य पक्ष्मण आश्रयं दहेत् । केन ? सूच्यग्रेणाग्निवर्णेन बाह्यालजेस्तु भिन्नस्य दाहः कार्य्यः । अलजीशब्दः पुंस्यपि दृष्टः । अर्बुदस्य क्षारवह्निभ्यां सुच्छिन्नस्य दाहः कार्य्यः ॥ २७ ॥

इति श्रीमद्गङ्गादत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्ग-सुन्दराख्यायामुत्तरस्थाने वर्त्मरोगप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥

---

वर्त्मरोगप्रतिषेधादनन्तरं स्थानानुपूर्व्या सन्धिसितासितरोगविज्ञानमारभ्यते । अथात इत्यादि । सन्धिश्च सितासितौ च सन्धिसितासितास्तेषु रोगास्तेषां विज्ञानं । शेषं पूर्व्ववत् । यथोद्देशस्तथा निर्देश इति तावेव तावत्सन्धिरोगानाह,—वायुरिति ।

कफात्कफस्रवे श्वेतं पिच्छलं बहलं स्रवेत् ॥ ३ ॥
कफेन शोफस्तीच्णाग्रः चारबुद्बुदकोपमः।
पृथुमूलबलः * स्निग्धः सवर्णम्मृदुपिच्छिलः।
महानपाकः कण्डूमानुपनाहः स नीरुजः ॥ ४ ॥
रक्ताद् रक्तास्रवे ताम्रं बहूष्णं चास्रु संस्रवेत् ॥ ५ ॥
वर्त्मसन्ध्याश्रया शुक्ले पिटिका दाहशूलिनी।
ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्व्वणी ॥ ६ ॥
पूयास्रावे मलाः सास्रा वर्त्मसन्धेः कनीनकात्।
स्रावयन्ति मुहुः पूयं सास्रत्वङ्मांसपाकतः ॥ ७ ॥
पूयालसो व्रणः सूक्ष्मः शोफसंरम्भपूर्व्वकः।
कनीनसन्धावाध्मायी पूयास्रावी सवेदनः ॥ ८ ॥
कनीनस्यान्तरलजी शोफो रुक्तोद-दाहवान् ॥ ९ ॥
अपाङ्गे वा कनीने वा कण्डूषा-पच्मपोटवान्।
पूयास्रावी क्रमिग्रन्थिर्ग्रन्थिक्रमियुतोऽर्तिमान् ॥ १० ॥

---

* पृथुमूलश्चल इति वा पाठः।

---

पवनः कुपितो जलवाहिनीः शिराः प्राप्य जलाकृति अश्रु स्रावयते। कुतः ? वर्त्म-शुक्लसन्धः कनीनकात्। तेन जलाभस्रावेण नयनं सरुक् सरागं सशोफञ्च स्यात्। स च जलस्रावाख्यो रोगः। कफादिति। कफात् कफस्रवे सति श्वेतं पिच्छलञ्च बहलं च स्रवेत् ॥ १—३ ॥

कफेनेति। श्लेष्मणा शोफस्तीच्णादिगुणः स उपनाहाख्यो नीरुजः स्यात्। रक्तादिति। रक्तेन रक्तस्रावी भवति तस्मिंश्च ताम्रवर्णमुष्णं वा अस्रं संस्रवेत्। वर्त्मेति। वर्त्मसन्धिराश्रयो यस्याः सा वर्त्मसन्ध्याश्रया शुक्ले पिटिका शूलदाहवती ताम्रवर्णा मुद्गसदृशी पर्व्वणी भण्यते। सा च भिन्ना सती रक्तं स्रवति। एषा च रक्तसमुत्थैव वेद्या। रक्तस्रावादनन्तरम[illegible]ः पाठाद्रक्तस्रावित्वाच्च। पूयास्रावइति। पूयस्रावाख्ये दोषा रक्तसहिता वर्त्मसन्धेः कनीनकात् पुनः पुनः पूयं सास्रत्वङ्मांसपाकाद्धेतोः स्रावयन्ति ॥ ४—७ ।

पूयालस इति। पूयालसो व्रण उच्यते। कीदृक् ? सूक्ष्मः। तथा शोफ-संरम्भपूर्व्वकः, क्वासौ स्यात् ? कनीनसन्धौ। तथाऽऽध्मायी आनाहवान्। पूया-स्रावी सरुक स्यात। कनीनस्यान्तरिति। कनीनस्यान्तः शोफो रुक्तोददाहवान-

उपनाह-कृमि-ग्रन्थि-पूयालसक-पर्व्वणी: ।
शस्त्रेण साधयेत्पञ्च सालजीनास्रवांस्त्यजेत् ॥ ११ ॥
पित्तं कुर्यात्सिते बिन्दूनसितश्यावपीतकान् ।
मलाक्तादर्शतुल्यं वा सर्व्वं शुक्लं सदाहरुक् ॥
रोगोऽयं शुक्तिकासंज्ञ: सशकृद्भेदतृड् ज्वर: ॥ १२ ॥
कफाच्छुक्ले समं श्वेतं चिरवृध्यधिमांसकम् ।
शुक्लार्म शोफस्त्वरुज: सवर्णो बहलो मृदु: ॥
गुरु: स्निग्धोऽम्बुबिन्द्वाभो बलासग्रथितं स्मृतम् ॥ १३ ॥
बिन्दुभि: पिष्टधवलरुत्सन्नै: पिष्टकं वदेत् ॥ १४ ॥
रक्तराजीततं शुक्लमुष्यते यत्सवेदनम् ।
अशोफाश्रूपदेहं च शिरोत्पात: सशोणितात् ॥ १५ ॥
उपेक्षित: शिरोत्पातो राजीस्ता एव वर्द्धयन् ।
कुर्यात्सास्रं शिराहर्षं तेनाच्युद्वीक्षणाक्षमम् १६ ॥
शिराजाले शिराजालं बृहद्रक्तं घनोन्नतम् ॥ १७ ॥

---

लजीत्युच्यते । अपाङ्ग इति । अपाङ्गे कानीने वा कण्ड्वादिमांस्तथा पूयास्रावी ग्रन्थिरेव कृमियुक्तोऽर्त्तिमान् कृमिग्रन्थिरुच्यते । उपनाहेति । उपनाहादींश्चतुर: शस्त्रेण साधयेत् । आस्रवान् जलास्रावादींश्चतुर अलजीञ्चेति पञ्च त्यजेत् ॥ ८—११ ॥

एवं सन्धिगतान्नवरोगानाख्याय सितभागस्थान् रोगानाह,—पित्तमिति । सिते नेत्रदेशे । पित्तं कर्त्तृ बिन्दून् कृष्णश्यावपीतान् कुर्य्यात् । मललेपदिग्धदर्पणसमानं वा सर्व्वं शुक्लम् ; एवमुभयप्रकारोऽप्ययं सदाहरुक् शुक्तिकासंज्ञो रोग: शकृद्भेदेन तृषा ज्वरेण च युक्त: ॥ १२ ॥

कफादिति । कफाच्छुक्लभागे समं न तु विषमं तथा श्वेतवर्णमधिमांसकं चिरवृद्धि तच्छुक्लार्म्म । शोफ इति । शोफस्तु नीरुज: समानवर्णो बहलादिस्तथा जलबिन्दुसमो बलासग्रथितं स्मृतम् । बिन्दुभिरिति । बिन्दुभि: पिष्टवत्सितैरुत्सन्नै: पिष्टकं नामार्म्म वदेत् । रक्तेति । रक्तराजीततं शुक्लं शुक्लभाग उष्यते । यत्सवेदनं शोफाश्रुलेपरहितं शोणिताच्छिरोत्पात: । उपेक्षित इति । शिरोत्पातोऽचिकित्सितस्ता एव रक्ता एव राजीर्व्वर्द्धयन् शिराहर्षं सास्रं कुर्य्यात् । तेन शिराहर्षेण लोचनं वीक्षणाक्षमं स्यात् । शिराजाल इति । शिराजाले

शोणितार्म्म समं श्लक्ष्णं पद्माभमधिमांसकम् ॥ १८ ॥
नीरुक् श्लक्ष्णोऽर्ज्जुनं बिन्दुः शशलोहितलोहितः ॥ १९ ॥
मृद्वाशुवृद्ध्यरुङ्मांसं प्रस्तारि श्यावलोहितम्।
प्रस्तार्य्यर्म्म मलैः सास्रैः स्नाय्वर्म स्नावसन्निभम् ॥ २० ॥
शुक्लासृक्पिण्डवच्छ्यावं यन्मांसं बहलं पृथु।
अधिमांसार्म तद् दाहघर्षवन्तश्च शिरावृताः ॥
कृष्णासन्नाः शिरासंज्ञाः पिटिकाः सर्षपोपमाः ॥ २१ ॥
शुक्ति-हर्ष-शिरोत्पात-पिष्टक-ग्रथितार्जुनम्।
साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥
नवोत्थं तदपि द्रव्यैरर्म्मोक्तं यच्च पञ्चधा।
तच्छेद्यमसितप्राप्तं मांसस्नायुशिरावृतम् ॥
चर्म्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं च वर्ज्जयेत् ॥ २२ ॥
पित्तं कृष्णेऽथवा दृष्टौ शुक्रं तोदाश्रुरागवत्।
छित्त्वा त्वचं जनयति तेन स्यात् कृष्णमण्डलम् ॥

---

वृहत्तया रक्तं घनमुन्नतञ्च यद्भवति तच्छिराजालं नाम। शोणितार्म्म सममिति। समं न तु विषमं तथा श्लक्ष्णं यदधिमांसकं तच्छोणितार्म्म ॥ १३—१८ ॥

नीरुगिति। नीरुजः श्लक्ष्णो बिन्दुः शशलोहितलोहितः तास्रोऽर्ज्जुनं नाम। मृद्विति। मांसं प्रस्तारितं तथा मृदु तथा प्रागाशुवृद्धि तथा नीरुक्श्यावलोहितं प्रस्तार्य्यर्म्मेत्युच्यते। तच्च विभिर्दोषैः सशोणितैः स्यात्। स्नावसदृशन्तु स्नाय्वर्मेत्युच्यते। शुक्लेति। शुक्लरक्तपिण्डवच्छ्यावं यन्मांसं तथा बहलं पृथु च स्यात् तदधिमांसार्म्म भण्यते। पिटिकादाहादिमत्यस्तथा सिराचिताः कृष्णभागासन्नाः सर्षपसंस्थानाः सिरा-संज्ञाः। सितभागानां तेषां त्रयोदशानां साधनं सूचयति। शुक्लीति। शुक्त्यादीन् षड़ौषधैः साधयेत्। शेषान् सप्त शस्त्रेण साधयेत्। नवोत्थाने तानपि भेषजैरुपक्रमेत्; न केवलं पूर्व्वोक्तं षट्कमित्यर्थः। यच्च पञ्चप्रकारकमर्म्मोक्तं शुक्लार्म्म शोणितार्म्म प्रस्तार्य्यर्म्म स्नाय्वर्म्माधिमांसार्म्म एतच्छेदनार्हम्। यत् कृष्णभागप्राप्तं मांसस्नायुशिरावृतम् चर्म्मोद्दालवदुच्छ्रायि तद्वर्ज्जयेन्न चिकित्सेत्। यच्च दृष्टिप्राप्तं तदपि वर्ज्जयेत् ॥ १९--२२ ॥

अथ कृष्णरोगानाह,—पित्तमिति। पित्तं कर्त्तृ कृष्णभागे दृष्टौ वा शुक्रं जनयते। किम्भूतं? तोदास्रुरागयुक्तं। किं कृत्वा? त्वचं प्रथमं पटलं छित्त्वा तेन कृष्ण-मण्डलं पक्वजम्बुसदृशं निम्नञ्च व्रतशुक्रकं स्यात्। तच्च कृच्छ्रसाध्यं। द्वितीयपटलव्यधात्तु

पक्कजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्रकम् ।
तत्कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात् ॥
तत्र तोदादिबाहुल्यं सूचिविद्धाभकृष्णता ।
तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ॥ २३ ॥
शङ्खशुक्लं कफाच्छ्रावं * नातिरुक् शुद्धशुक्रकम् ॥ २४ ॥
आताम्रपिच्छलास्रस्रुदाताम्रपिटिकातिरुक् ।
अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्यास्रजाजका ॥ २५ ॥
शिराशुक्रं मलैः सास्रैस्तज्जुष्टं कृष्णमण्डलम् ।
सतोद-दाह-ताम्राभिः शिराभिरवतन्यते ॥
अनिमित्तोष्ण-शीताच्छ-घनास्र-स्रुक् च तत्त्यजेत् ॥२६॥
दोषैः सास्रैः सकृत्कृष्णं नीयते शुक्लरूपताम् ।
धवलाभ्रोपलिप्ताभं निष्पावार्द्धदलाकृति ॥
अतितीव्र-रुजा-राग-दाह-श्वयथु-पीड़ितम् ।
पाकात्ययेन तच्छुक्रं वर्ज्जयेत्तीव्रवेदनम् ॥ २७ ॥

---

* कफात्साध्यमिति वा पाठः ।

---

याप्यं स्यात् । तत्र द्वितीयपटलव्यधे तोदादीनां बाहुल्यं । तथा सूचीविद्धोपमकृष्णमण्डलत्वञ्च तोदादिभूयस्त्वेन । सूचीविद्धोपमकृष्णमण्डलतया च द्वितीयपटलव्यधोऽनुमीयत इत्यर्थः । तृतीयपटलच्छेदाद् व्रणैर्निचितमसाध्यं क्षतशुक्रकम् ॥ २३ ॥

एवं क्षतशुक्रकं त्रिधाऽभिधाय शुद्धशुक्रमाचष्टे,—शङ्खशुक्लमिति । शङ्खवच्छुक्लं शुद्धशुक्रकं तच्च कफाज्जायते । आताम्रेति । आताम्रमीषत्ताम्रवर्णं पिच्छलञ्चास्रं स्रवति या सा आताम्रपिच्छलास्रस्रुत् । तथा आताम्रपिटिका तथाऽतिपीड़ावती तथाऽजाविट्सदृश उच्छ्रायः कार्ष्ण्यं यस्याः सैवमजकाख्या रक्तेन स्यात् । सा च वर्ज्याऽसाध्यत्वात् । शिराशुक्रमिति । सरक्तैर्मलैः शिराशुक्रं स्यात् । तेन शिराशुक्रेण जुष्टं कृष्णमण्डलं शिराभिरवतन्यते । किम्भूताभिः ? सतोददाहताम्राभिः । अनिमित्तमकस्मादस्मिन् कदाचिच्छीतं कदाचिदुष्णमच्छं घनं वाऽस्रं स्रवति तच्च त्यजेदसाध्यत्वात् ॥ २४—२६ ॥

दोषैरिति । दोषैः सरक्तैः सकृदेकहेलयैव कृष्णमण्डलं शुक्लरूपतां नीयते । कम्भूतम् ? धवलाभ्रोपलिप्ताभम् । तथा निष्पावार्द्धदलस्येवाकृतिर्यस्य तदेवम् । तथा [तीव्रवेदना-राग-दाह-श्वयथुभिः पीड़ितम् । तच्च शुक्रं पाकात्ययेन तीव्रवेदनं वर्ज्ज्ययेन्नोपक्रमेत् ॥ २७ ॥

यस्य वा लिङ्गनाशोऽन्त:श्यावं यद्वा सलोहितम्।
अत्युत्सेधावगाढं वा सास्रु नाड़ीव्रणावृतम्॥
पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम्॥ २८॥
पञ्चेत्युक्ता गदा: कृष्णे साध्यासाध्यविभागत:॥ २९॥
इत्यष्टाङ्गहृदये शालाक्यतन्त्रे सन्धिसितासितरोगविज्ञानीयो
नाम दशमोऽध्याय:॥ १०॥

---

## एकादशोऽध्याय:।

अथात: सन्धिसितासितरोगप्रतिषेधं व्याख्यास्याम:।
इति ह स्माहुरात्रेयादयो महर्षय:॥ १॥
उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च।
लेखयेन्मण्डलाग्रेण ततश्च प्रतिसारयेत्॥

---

यस्येति। यस्य च शुक्रस्य लिङ्गनाशोऽन्तर्दृष्टिविनाश इत्यर्थ:। यच्च श्यावमन्तर्यच्च किञ्चिल्लोहितम्; तथाऽत्युन्नतमवगाढं वा; सास्रु नाड़ीव्रणावृतं वा; तथा पुराणं वत्सरातीतम्; तथा विषमसंस्थानम्; तथा मध्ये विच्छिन्नं यच्च शुक्रकं तत्सव वर्ज्जयेत्। पञ्चेति। कृष्णमण्डल इति पूर्व्वोक्तेन प्रकारेण पञ्च रोगा: साध्यासाध्यविभागेनोक्ता: सुखग्रहणधारणार्थं संख्योपादानम्॥ २८—२९॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने सन्धिसितासितरोगविज्ञानीयो
नाम दशमोऽध्याय:॥ १०॥

---

अस्मादनन्तरं सन्धिसितासितरोगप्रतिषेध उच्यते। अथात इति। प्रतिषिध्यते निराक्रियते चिकित्स्यत इति प्रतिषेधश्चिकित्सा। शेषं पूर्व्ववत्। जलास्रावकफास्रावयोरसाध्यत्वादुपनाहचिकित्सामाह,—उपनाहमिति। वैद्यो मण्डलाग्रेणोपनाहं सन्धिरोगं लेखयेत्। किम्भूतम्? स्विन्नम्, वर्त्मरोगप्रतिषेधोक्तेन प्रकारेण पोटलिकयोष्णादकप्लुतयेति। तथा व्रीहिमुखेन भिन्नं तत: पिप्पल्यादिभि: प्रतिसारयेत्।

पिप्पली-क्षौद्र-सिन्धूत्थैर्बध्नीयात् पूर्व्ववत्ततः ।
पटोलपत्रामलककाथेनाश्चोतयेच्च तम् ॥ २ ॥
पर्व्वणी बड़िशेनात्ता बाह्यसन्धित्रिभागतः ।
व्रीहिपत्रेण वर्द्धगाऽर्द्ध स्यादश्रुगतिरन्यथा ॥
चिकित्सा चार्म्मवत् क्षौद्रसैन्धवप्रतिसारिता ॥ ३ ॥
पूयालसे शिरां विध्येत्ततस्तमुपनाहयेत् ।
कुर्व्वीत चाक्षिपाकोक्तं सर्व्वं कर्म्म यथाविधि ॥ ४ ॥
सैन्धवार्द्रक-कासीस-लोह-ताम्रैः सुचूर्णितैः ।
चूर्णाञ्जनं प्रयुञ्जीत सक्षौद्रैर्वा रसक्रियाम् ॥ ५ ॥
कृमिग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ।
त्रिफला-क्षौद्र-कासीस-सैन्धवैः प्रतिसारयेत् ॥ ६ ॥
पित्ताभिष्यन्दवच्छुक्तिं बलासाह्वयपिष्टकौ ।
कफाभिष्यन्दवन्मुक्त्वा शिराव्यधमुपाचरेत् ॥ ७ ॥
बीजपूररसाक्तञ्च व्योषकट्फलमञ्जनम् ॥ ८ ॥

---

अनन्तरं पूर्व्ववत् प्रक्षाल्योष्णेन वारिणा, घृतेन सिक्तमभ्यक्तं मधुसर्पिषा ऊर्द्ध्वाधः कणयोश्च यवसक्तुभिः पिण्डीं दत्त्वा बध्नीयादिति । तथा पटोलपत्रामलककाथेन चाश्चोतयेत् ॥ १—२ ॥

पर्व्वणीति । पर्व्वणी बाह्यसन्धित्रिभागे बड़िशेन गृहीता सती व्रीहिपत्रेण वर्ध्या छेदनीया । कुत्र भागेऽर्द्धेत्याह,—अर्द्धेऽतोऽन्यथा अधिकच्छेदनादश्रुगतिः स्यात् । चिकित्सा चेयमर्म्मवत् । तत्र चैवमुक्तम् । “सम्यक् छिन्नं मधुव्योषसैन्धवप्रतिसारितम् । उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा । बध्नीयात् सेचयेन्मुक्त्वा तृतीयादिदिनेषु च” । करञ्जबीजसिद्धेन क्षीरेणेति ॥ ३ ॥

पूयालस इति । पूयालसे शिरां विध्येदनन्तरमुपनाहयेत् । अक्षिपाकोक्तञ्चाशेषं कर्म्म यथाविधि कुर्व्वीत । सैन्धवेति । सैन्धवादिभिश्चूर्णाञ्जनं प्रयुञ्जीत । सैन्धवादिभिरेव माक्षिकयुतैरसक्रियां वा । कृमिग्रन्थिमिति । कृमिग्रन्थिं भित्त्वा त्रिफलाभिः प्रतिसारयेत् । किम्भूतम् ? करीषेण गोमयादिना स्विन्नम् तथा व्रीहिमुखादिभिर्भित्त्वा विलिख्य च । पित्तेति । शुक्त्याख्यं रोगं पित्ताभिस्यन्देन तुल्यमुपाचरेत् । बलासग्रथितं पिष्टकञ्च शिराव्यधं वर्ज्जयित्वा कफाभिष्यन्दवदुपाचरेत । तथा बीजपूरकरसेनाक्तं व्योषकट्फलमञ्जनं हितम् ॥ ४—८ ॥

जातीमुकुल-सिन्धूत्थ-देवदारु-महौषधैः ।
पिष्टैः प्रसन्नया वर्त्तिः शोफकण्डूघ्नमञ्जनम् ॥ ९ ॥
रक्तास्यन्दवदुत्पातहर्षजालार्ज्जुनक्रिया ॥ १० ॥
शिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनम् ।
शिराहर्षे तु मधुना श्लक्ष्णघृष्टं रसाञ्जनम् ॥
अर्ज्जुने शर्करा-मस्तु-क्षौद्रैराश्चोतनं हितम् ।
स्फटिकः कुङ्कुमं शङ्खो मधुको मधुनाञ्जनम् ।
मधुना चाञ्जनं शङ्खः फेनो वा सितया सह ॥ ११ ॥
अर्म्मोक्तं पञ्चधा यत्तु तनु धूमाविलञ्च यत् ॥
रक्तं दधिनिभं यच्च शुक्रवत्तस्य भेषजम् ॥ १२ ॥
उत्तानस्येतरत् स्विन्नं ससिन्धूत्थेन चाञ्जितम् ।
रसेन बीजपूरस्य निमील्याक्षि विमर्द्दयेत् ॥ १३ ॥
इत्थं संरोषिताक्षस्य प्रचलेऽर्म्माधिमांसके ।
धृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥
अपाङ्गमीक्षमाणस्य वृद्धेऽर्म्मणिकनीनकात् ।
वलो स्याद् यत्र तत्रार्म्म बड़िशेनावलम्बितम् ॥
नात्यायतं मुचुण्ड्या वा सूच्या सूत्रेण वा ततः ।
समन्तान्मण्डलाग्रेण मोचयेदथ माक्षिकम् ॥

---

जातीति । जातीमुकुलादिभिः प्रसन्नया पिष्टैर्व्वर्त्तिः शोफकण्डूघ्नमञ्जनम् । रक्तेति। शिरोत्पातशिराहर्षशिराजालार्ज्जुने क्रिया रक्तस्यन्द इव कार्य्या । शिरोत्पात इति । ] शिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनं हितम् । शिराहर्षे माक्षिकेण श्लक्ष्णं घृष्टं रसाञ्जनम् । अर्ज्जुने शर्करामस्तुक्षौद्रेणाश्चोतनं हितम् । स्फाटिकादिमाक्षिकेणाञ्जनमथवा सौवीराञ्जनं मधुना सह हितम् । शङ्खो वा समुद्रफेनो वा शर्करया सह हितः । अर्म्मोक्तमिति । अर्म्म पञ्चप्रकारमुक्तम् । तेषु मध्ये यत्तनु धूमवदाविलञ्च तथा रक्तं रक्तवर्णं दधिसदृशञ्च यत्तस्यार्म्मणः शुक्रसदृशमौषधम ॥ ९—१२ ॥

अथार्म्मणः शस्त्रचिकित्सामाह,—उत्तानस्येति । उत्तानस्य पुंसो वामदक्षिणयोरितरदेकमक्षि स्विन्नं कृतस्वेदञ्च । तथा बीजपूररसेन सैन्धवान्वितेनाञ्जितं निमील्य स्थगयित्वा विमर्द्दयेन्मलयेत् । अनेन प्रकारेण संरोषिताक्षस्य सतोऽर्म्माधिमांसे प्रचले

कनीनकमुपानीय चतुर्भागावशेषितम्।
छिन्द्यात् कनीनके रक्षेद्वाहिनीश्चाश्रुवाहिनीः ॥ ॥
कनीनकव्यधादश्रुनाड़ी चाक्षिण प्रवर्त्तते।
वृद्धेऽर्म्मणि तथाऽपाङ्गात् पश्यतोऽस्य कनीनकम् ॥ १४ ॥
सम्यक् छिन्नं मधु-व्योष-सैन्धव-प्रतिसारितम्।
उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥
बन्धीयात् सेचयेन्मुक्त्वा तृतीयादिदिनेषु च।
करञ्जबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥
सक्षौद्रैर्द्विनिशा-रोध्र-पटोली-यष्टि-किंशुकैः।
कुरण्टमुकुलोपेतैर्मुञ्चेदेवाक्षि सप्तमे ॥ १५ ॥
सम्यक् छिन्ने भवेत् स्वास्थ्यं हीनातिच्छेदजान् गदान्।
सेकाञ्जनप्रभृतिभिर्ज्जयेल्लेखनबृंहणैः ॥ १६ ॥
सिता-मनःशिलैलेय-लवणोत्तमनागरम्।
अर्द्धकर्षान्वितं तार्क्ष्यं पलार्द्धञ्च मधुप्लुतम्।
अञ्जनं श्लेष्मतिमिर-पिल्ल-शुक्लार्म्म-शोषजित ॥ १७ ॥

---

सति मूर्ध्नि निश्चलं धृतस्य वर्त्मनोश्च विशेषेण धृतस्य कनीनकादर्म्मणि वृद्धे सत्यपाङ्गं पश्यती यत्र वली स्यात् तत्रार्म्म बड़िशेनावलम्बितं नात्यायतं नातिदीर्घं यथा भवति तथाऽवलम्बितम्। ततोऽनन्तरं मुचुण्ड्या सूच्या सूत्रेण वा मोचयेत्। यथा मोचितञ्च विच्छेदितञ्च सत्कनीनकमुपानीय चतुर्भागावशेषितं मण्डलाग्रेण छिन्द्यात्। व्यवहितानामत्र पदार्थानां योग्यतावशादेव सम्बन्धोऽत्र योज्यः। कनीनकं रक्षेत्। कनीनकव्यधादस्रनाड़ी चाक्षि प्रवर्त्तते। अपाङ्गप्रदेशाच्चार्म्मणि वृद्धे तथा कनीनकं वीक्षमाणस्य छिन्द्यात् ॥ १३—१४ ॥

सम्यगिति। सम्यक् छिन्नं मध्वादिभिः प्रतिसारितं घृतेनोष्णेन सिक्तं माक्षिकसर्पिषाऽभ्यक्तं बध्नीयात्। तृतीयादिदिनेषु च मुक्त्वा क्षीरेण करञ्जबीजसिद्धेन सेचयेत्। द्विहरिद्रादिभिश्च क्वथितैः शीतैश्च मधुयुतैः सेकं कुर्य्यात्। सप्तमे दिने मुञ्चेदेव। सम्यक्छिन्न इति। सम्यक् छिन्नेऽर्म्मणि स्वास्थ्यं भवेत्। हीनातिच्छेदजान् गदान् सेकाञ्जनाद्यैर्यथायोगं लेखनबृंहणैश्च जयेत्। सितेति। सितादिभिरर्द्धकर्षान्वितैरसाञ्जनं त्रिकर्षोन्मितं मधुद्रुतमञ्जनं श्लेष्मतिमिरादिजित् ॥ १५—१७ ॥

# अष्टाङ्गहृदयम्।

## कल्पस्थानम्।

### प्रथमोऽध्यायः।

अथातो वमनकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥
वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने।
नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता॥ २॥

---

चिकित्सितस्थानानन्तरं कल्पस्थानमारभ्यते। चिकित्सितस्थानस्य कल्पस्थानापेक्षत्वात्। तथाहि प्रागध्यगीष्ट। तर्पणेन रसैनैश्चोर्मद्यैः कल्पोदितानि वा। वमनानि प्रयुञ्जीतेति। तदेवमाद्युपदेशात् सापेक्षत्वमस्य। तस्मात् कल्पस्थानमुच्यत इत्याह,—अथात इति। वमनमूर्द्ध्वं मुखेन दोषहरणम्। तस्य कल्पः कल्पनं योजनमित्यर्थः। शेषमायुष्कामीयाध्यायवद्व्याख्येयम्। प्राधान्याच्च वमनकल्पे मदनमेव शस्यत इत्याह, इतीति। वमनविषये नित्यं मदनं श्रेष्ठम्। निरपायत्वादन्यद्रव्यविषयेऽपि वा तस्योपयोगात् सर्व्वत्रानिषिद्धप्रसरत्वाच्च। लाघवमिच्छंश्च तन्त्रकृदिदमवोचत्। त्रिवृन्मूलं विरेचन इति। यथा मदनं वमने नित्यं श्रेष्ठं तथा त्रिवृन्मूलं विरेचने निरपायत्वादिहेतुना। मदनं वर्ज्जयित्वा व्याधिवशादन्यस्य जीमूतादेर्विशिष्टता। वक्ष्यति हि,—जीमूतन्तु विशेषतः प्रयोक्तव्यं ज्वरश्वासकासहिक्कातिसारिणामिति। एवं त्रिवृन्मूलं वर्ज्जयित्वा परस्य विरेचनद्रव्यस्य व्याधिविशेषेण विशिष्टत्वम्। न तु त्रिवृन्मूलवत्सर्व्वत्रानिषिद्धप्रसरत्वम् निरपायत्वञ्च। तथा चोक्तं चरके। "त्रिवृत्सुखविरेचनानाम्" इति। तदेवं वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने सर्व्वदेति स्थितम्॥ २॥

फलानि तानि पाण्डूनि न चातिहरितान्यपि
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्म-वसन्तयोः ॥
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बद्ध्वा प्रलेपयेत् ।
गोमयेनानु मुत्तोलीं धान्यमध्ये निधापयेत् ॥
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
निष्कृष्य निर्गतेऽष्टाहे शोषयेत्तान् यथातपे ॥
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।
दधि-मध्वाज्य-पललैर्मृदित्वा शोषयेत् पुनः ।
ततः सुगुप्तं संस्थाप्य कार्य्यकाले प्रयोजयेत् ॥ ३ ॥
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ।
शर्व्वरीं मधुयष्ट्या वा कोविदारस्य वा जले ॥
कर्बुदारस्य बिम्ब्या वा नीपस्य विदुलस्य वा ।
शणपुष्प्याः सदापुष्प्या प्रत्यक्पुष्प्युदकेऽथवा ॥
ततः पिबेत् कषायं तं प्रातर्म्मृदितगालितम् ।
सूत्रोदितेन विधिना साधूक्तेन तथा वमेत् ॥ ४ ॥

---

फलानीति । अथ शब्दोऽत्र प्रस्तुतौ मदनस्य प्रस्तावे तानि मदनस्य फलानि पाण्डूनि गृहीत्वा नत्वतिपाण्डून्यतिक्रान्तपाकत्वात् । न चातिहरितान्यामत्वात् । कदादाय ? प्रशस्तनक्षत्रे दिवसे । कस्मिन्नृतौ ? मध्ये ग्रीष्मवसन्तयोः । एवमृतुसन्धौ गृहीतानि प्रमृज्य व्यपगतमलादिदोषाणि कृत्वा कुशमय्यां मुत्तोल्यां मूटिकायां क्षिप्त्वा पुनरुपरिष्टाद्बद्ध्वा च ततो गोमयेन तां मुत्तोलीं लिम्पेत् । अनन्तरं धान्यमध्ये निधापयेत् स्थापयेत् । कुशानां समूहो रचनाविशेषेण निष्पादितः कुशमुत्तोलीत्युच्यते । मृदुभूतानि तानि मध्विष्टगन्धानि कदाचिन्मधुगन्धानि कदाचिदिष्टगन्धानि कुशवेष्टनादष्टाहेन ज्ञात्वानन्तरमष्टाहेऽतिक्रान्ते कुशमुत्तोल्याः निष्कृष्टानि बहिःकृतान्यनन्तरमातपे शोषयेत् । ततोऽनन्तरं तेषां मदनफलानां शुष्काणां फलपिप्पलीरुद्धृत्य दधिमध्वाज्यपललैर्मृदित्वा संचूर्ण्य पुनरातपे शोषयेत् । ततोऽनन्तरं सुष्ठु गुप्तं धारयित्वा कार्य्यकाले वमनावसरे ताः प्रयोजयेत् ॥ ३ ॥

अथेति । अथानन्तरं ततः पिप्पलीभ्यो मात्रां परिमाणं प्रायेण देशकालादिवशाद्या मात्रां विकल्प्यानन्तरं तां मात्रां जर्जरीकृत्य सचूर्णं मधुयष्ट्यादीनामन्यतमस्य जले शर्व्वरीं सकलां रात्रिं वासयेदभिषवणाय । ततोऽनन्तरं तं कषायं मृदितगालितं पूर्व्वं मृदितं पश्चाद्गालितं वस्त्रपूतं कृत्वा सूत्रोदितेन विधिना श्वोवम्यमित्यादिग्रन्थोक्तेन

श्लेष्मज्वर-प्रतिश्याय-गुल्मान्तर्विद्रधीषु च ।
प्रच्छर्द्दयेद्विशेषेण यावत् पित्तस्य दर्शनम् ॥ ५ ॥
फलपिप्पलिचूर्णं वा क्वाथेन स्वेन भावितम् ।
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ॥
पिवेज्ज्वरारुचिष्वेवं ग्रन्थ्यरप्रचर्बुदोदरी ।
पित्ते कफस्थानगते जीमूतादिजलेन तत् ॥ ६ ॥
हृद्दाहेऽधोऽस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ।
क्षैरेयीं वा कफ-च्छर्दि-प्रसेक-तमकेषु तु ।
दध्युत्तरं वा दधि वा तच्छृतक्षीरसम्भवम् ॥ ७ ॥
फलादि-क्वाथ-कल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥ ८ ॥

---

पिबेत् । एवं कृते सति तेन साधु वमेत् । विशेषेण श्लेष्मज्वरादिषु वमेत् यावत् पित्तस्य दर्शनम् ॥ ४।५ ॥

फलपिप्पलिचूर्णमिति । अथवा मदनफलपिप्पलीचूर्णं स्वेन फलपिप्पलीक्वाथेन भावितं त्रिभागत्रिफलाचूर्णान्वितं कोविदारादिजलेन ज्वरादिष्वरुच्यन्तेष्वेवं पूर्व्वोक्तेन प्रकारेण पिबेत् । पित्ते कफस्थानगते सति ग्रन्थ्यादिमानरस्तन्मदनफलं जीमूतादि-जलेन पिबेत् ॥ ६ ॥

हृद्दाहइति । हृदयदाहेऽधोगे रक्तपित्ते तस्य मदनस्य फलपिप्पलीभिः क्वथितं क्षीरं क्षैरेयीं वा पिबेत् । तन्त्रान्तरे च क्षीरश्रपणविधिरुक्तः । "द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः" इति । अस्रपित्त इत्येतावत्युक्त ऊर्द्ध्वगोभयगयोर्वमनायोग्यत्वादेवाधोग्रहणे सिद्धे पुनरधोग्रहणं सुखतरप्रतिपत्त्यर्थम् । क्षैरेयीमिति । क्षीराड्ढञिति ढञ्ढिड्ढाणेति ङीप् । कफच्छर्दि-प्रसेकतमकेषु दध्युत्तरं दधिसरं वमने हितम् । अथवा दधि हितमुभयमपि वमने हितम् तच्छृतक्षीरसम्भवम् ॥ ७ ॥

फलादीति । कल्कश्च क्वाथश्च कल्क-क्वाथौ फलादीनां मदनफलजीमूतकादीनां कल्कक्वाथौ ताभ्यां सिद्धं पक्वं सर्पिः कफेनाभिभूतेऽग्नौ शुष्यच्छरीरे च वमनं हितम् । किम्भूतं सर्पिः ? तत्सिद्धदुग्धजं तैश्च फलादिभिः शृतं तत्सिद्धञ्च तद्दुग्धञ्च तस्मादुद्भूतम् ॥ ८ ॥

स्वरसं फलमज्ज्ञो वा भल्लातकविधिश्रृतम्।
आदर्व्वीलेपनात् सिद्धं लीढ्वा प्रच्छर्द्दयेत् सुखम्।
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत्॥ ९॥
वत्सकादिप्रतीवापः कषायः फलमज्जजः।
निम्बार्कान्यतरक्काथसमायुक्तो नियच्छति।
बद्धमूलानपि व्याधीन् सर्व्वान् सन्तर्पणोद्भवान्॥ १०॥
राठपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूचितम्।
वमेन्मण्डरसादीनां तृप्तो जिघ्रन् सुखं सुखी॥ ११॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा॥ १२॥
जीमूताद्याश्च फलवत् जीमूतन्तु विशेषतः।
प्रयोक्तव्यं ज्वर-श्वास-कास-हिक्कादिरोगिणाम्॥ १३॥
पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता॥
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे॥
शृते पयसि दध्यम्लं जाते हरितपाण्डुके।

---

स्वरसमिति। फलमज्ज्ञो वा स्वरसं भल्लातकविधानेन शृतं दर्व्वीलिपं यावत् पक्का लीढ्वा सुखेन वमेत्। तच्च लेहं भक्ष्यादिषु तथा तस्य मदनफलस्य कषायान् योजयेत्। वत्सकेति। मदनफलमज्जजो वा कषायो वत्सकादिगणप्रतीवापो निम्बार्कान्यतरक्काथसंयुक्तो व्याधीन् समूलानपि नियच्छति। कीदृशान्? सन्तर्पणजान्॥९—१०॥

राटपुष्पेति। मदनपुष्पफलसूक्ष्मचूर्णैः सुरूचितं पुष्पं जिघ्रन् मण्डरसादीनां तृप्तः। आदिग्रहणात् कृशराक्षीरयवागूनां परिग्रहः। तथाविधो जिघ्रन् सुखी क्लेशसहिष्णुः सुखेन वमेत्। एवमिति। एवमेवानेनैव क्रमेण फलाभावे सति पुष्पं प्रकृतत्वान्मदनस्य कल्पनीयम्। अथादाय ततो मात्रां जर्ज्जरीकृत्य वासयेत्। शर्व्वरीं मधुयष्ट्या वा कोविदारस्य वा जल इत्यादिविधिना शलाटु वाऽपक्कं फलं वेवं कल्पनीयम्॥११--१२॥

जीमूताद्याइति। जीमूततुम्बीकोशातक्याद्याः कुटजफलपर्य्यन्ताः फलवन्मदन-फलतुल्यविधिना कल्प्याः। विशेषेन जीमूतो ज्वरादिषु योज्यः। पयइति। अस्य जीमूतस्य पुष्पे सम्पन्ने पयः क्षीरं जीमूतकशृतं प्रयोज्यम्। फलेऽस्य निष्पन्ने पयस्कृता जीमूतशृतक्षीरनिष्पादिता पेया योज्या। जीमूतफलस्य लोमशालोमशतया मृदुकठिन-भेदेन द्वैविध्यम्। लोमशे तस्मिन् जीमूतफले शृतक्षीरस्य या सन्तानिका शीतीभूत-स्योपरिष्टाद्घनोऽवयवस्तं वमने पिबेत्। अलोमशे जीमूते काठिन्यमागते तच्चूर्णयुतं दध्युत्तरं दधिसरं पिबेत्। शृते पयसि प्रकृतत्वाज्जीमूतफलैः शृते हरितपाण्डुके

आसुत्य वारुणीमण्डं पिबेन्मृदितगालितम् ।
कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ १४ ॥
इयञ्च कल्पना कार्य्या तुम्बीकोशातकीष्वपि ॥ १५ ॥
पर्य्यागतानां शुष्काणां फलानां वेणिजन्मनाम् ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥
द्वे वा त्रीण्यपि वाऽऽपोथ्य क्वाथे तिक्तोत्तमस्य वा ।
आरग्वधादिनवकादासुत्यान्यतमस्य वा ।
विमृद्य पूतं तं क्वाथं पित्तश्लेष्मज्वरी पिबेत् ॥ १६ ॥
जीमूतचूर्णं कल्कं वा पिबेच्छीतेन वारिणा ।
ज्वरे पैत्ते कवोष्णेन कफवातात् कफादपि ॥ १७ ॥
कास-श्वास विषच्छर्दि-ज्वरार्त्ते कफकर्शिते ।
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ १८ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ १९ ॥

---

लोमशाऽलोमशयोर्मध्यमामवस्थां प्राप्ते सति दध्यम्लं जातं पिबेत् । अम्लमेवः दधि दध्यम्लम्, केचित्तु मस्तु दध्यम्लमित्याहुः । जीमूतफलेन वाऽऽसुत्य वारुणीमण्डं पिबेत् । किम्भूतम् ? मृदितगालितं पूर्व्वं मृदितं खजादिना पश्चाद् गालितं प्रस्नुतम् । केषु ? कफारोचकादिषु । इयमिति । इयञ्च कल्पना पयःपुष्पेऽस्य निर्वृत्त इत्यादिकाऽऽसुत्य वारुणीमण्डमिति पर्य्यन्तं तुम्बीकोशातकीष्वपि कार्य्या ॥ १३—१५ ॥

पर्य्यागतानामिति । पर्य्यागतानां प्राप्तसम्यक्पाकानां फलानां वेणिजन्मनां देवदाल्युत्पन्नानां चूर्णस्य शुक्तिमर्द्धपलं पयसा वातपित्ताभ्यामर्दित आतुरः पिबेत् । द्वे वा त्रीण्यपि वा जीमूतफलान्यापोथ्य जर्ज्जरीकृत्य तिक्तोत्तमस्य निम्बस्य क्वाथे पित्तश्लेष्मज्वरी पिबेत् । अथवाऽऽरग्वधादिनवकादारग्वधवर्गादाद्यौषधनवकादन्यतमस्य क्वाथे द्वे वा त्रीण्यपि वा जीमूतफलान्यासुत्य सन्धाय तथा विमृद्य पूतं क्वाथं पित्तश्लेष्मज्वरी पिबेत् । "घराघरी च वेणी च देवकाली च जीमूतः" इति पर्य्यायाः ॥ १६ ॥

जीमूतचूर्णमिति । जीमूतचूर्णं फलपिष्टं कल्कीकृत्याथवा तच्चूर्णं पित्तज्वरे शीतजलेनालोड्य पिबेत् । तस्यैव कल्कं चूर्णं वा कफवातात् कफाच्चोद्भूते ज्वरे कवोष्णेन वारिणा पिबेत् । कासश्वासेति । कासाद्यार्त्ते कफार्दिते पुरुषे वमनविषय इक्ष्वाकुः शस्तः । प्रताम्यति मानवे प्रतमकाक्रान्तत्वात् यः प्रताम्यति नरस्तस्मिंश्च शस्तः । फलपुष्पविहीनस्यासञ्जातफलपुष्पस्येक्ष्वाकोः किसलयैः क्षीरं साधितं पित्त-

हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि।
स्यात्तदा कफजे कासश्वासे वम्यञ्च पाययेत् ॥ २० ॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः।
तेन तक्रं विपक्वं वा पिबेत् समधुसैन्धवम् ॥ २१ ॥
भावयित्वाजदुग्धेन बीजं तेनैव वा पिबेत्।
विष-गुल्मोदर-ग्रन्थि-गण्डेषु- श्लीपदेषु च ॥ २२ ॥
सक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ २३ ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत्।
नरः साधु वमत्येवं न च दौर्ब्बल्यमश्नुते ॥
तुम्ब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम्।
छर्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचितः ॥ २४ ॥
कास-गुल्मोदरगरे वाते श्लेष्माशयस्थिते।
कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषुच।

---

श्लेष्मज्वरे पित्तोद्रिक्ते प्रयोजयेत्। फलपुष्पेति। फलपुष्पविहीनस्येत्यनेन कोमलत्वं प्रतिपादयति इक्ष्वाकोस्तन्वक्तत्। अन्यथा प्रवालैः साधितं क्षीरं पित्तोद्रिक्ते प्रयोजयेदिति ब्रूयात्। इक्ष्वाकुफलस्य जरठावस्थस्य प्रयोगमाह,—हृतमध्यइति। हृतमध्ये जीर्णे सुपक्वे तस्मिन् इक्ष्वाकोः फले हृतमध्यभागत्वाच्छून्यमध्ये क्षीरं स्थितं सत् यदा दधि जातं स्यात्तदा कफकासादिषु वमनार्थं पाययेत्। मस्तुनेति। इक्ष्वाकुफलमध्यं वा मस्तुना। पाण्डुर्दितः पिबेत्। तेनेक्ष्वाकुफलमध्येन तक्रं वा विपक्वं मधुसैन्धवयुतं पिबेत्। समधुसैन्धवमित्युक्तं स्पष्टार्थं। वमनविधौ हि समधुसैन्धवस्य वमनस्यानुज्ञानात् ॥ १७—२१ ॥

भावयित्वेति। अजादुग्धेन तद्बीजं भावयित्वा तेनैव छागलीक्षीरेण पिबेत्। विषगुल्मादिषु। सक्तुभिरिति। सक्तुभिर्यवसक्तुभिस्तुम्बीस्वरसभावितैर्मन्थं वा पिबेत् कफोद्भवेषु ज्वरादिषु। गुल्मइति। कल्कं तुम्ब्याः मांसरसैः पिबेत्। गुल्मे तथा ज्वरे प्रसक्ते दीर्घकालानुबन्धिनि। एवं सति पुरुषः साधु कृत्वा वमति। दौर्ब्बल्यं नच प्राप्नोति। तुम्ब्याः फलरसैः पुष्परसैश्चावचूर्णितं शुष्कैः शोधितैस्तुम्बीफलरसैस्तुम्बीपुष्पचूर्णमिश्रैरवचूर्णितमाल्यमाघ्राय सुखं वमेत्। गन्धसम्पत् गन्धसम्पत्तिमान्। २२—२४ ॥

कासेति। कासादिषु तथा कफस्थानस्थे वाते श्लेष्मणि गलस्थे मुखस्थे च तथा कफसञ्चयजेष्वरोचकादिषु तथा स्थिरेषु दीर्घकालप्ररूढेषु महत्सु, चात्यन्तं प्रवृद्धेषु रोगेषु

धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ॥ २५ ॥
जीवकर्षभकौ वीरा कपिकच्छूः शतावरी।
काकोली श्रावणी मेदा महामेदा मधूलिका ॥
तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः।
कासे हृदयदाहे च शस्ता मधुसिताद्रुताः ॥ २६ ॥
ते सुखाम्भोऽनुपानाः स्युः पित्तोष्मसहिते कफे ॥ २७ ॥
धान्यतुम्बुरुयूषेण कल्कस्तस्य विषापहः ॥ २८ ॥
बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा रसे।
एकं धामार्गवं द्वे वा मानसे मृदितं पिबेत्।
तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥ २९ ॥
क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते।
कुष्ठ-पाण्ड्वामय-प्लीह-शोफ-गुल्म-गरादिषु ॥ ३० ॥
पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम्।
कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥ ३१ ॥
फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा।

---

धामार्गवः कोशफलाख्य इष्टः। जीवकर्षभकाविति। जीवकर्षभादीनां पृथक् प्रत्येकं तेषां रजोभिश्चूर्णैर्मधुसिताभ्यामत्यन्तं द्रुता द्रवीकृताः धामार्गवरजोऽन्वितास्तच्चूर्णमिश्रा लेह्याः कासे हृदयदाहे च शस्ताः। मधूलिका मधुयष्टिः ॥ २५—२६ ॥

त इति। त एव पूर्वोक्ता लेह्या उष्णोदकानुपाना वमनार्थं भवेयुः। कफे पित्तोष्मसहिते सति पित्तेन तथा पित्तकार्य्येणोष्मणा युक्ते। धान्येति। तस्य धामार्गवस्य कल्को धान्यतुम्बुरुभ्यां यूषेण क्वाथेनोपयुक्तो विषघ्नः स्यात्। बिम्ब्या इति। बिम्बादीनामन्यतमस्य रसे क्वाथे धामार्गवफलमेकं मृदितं कृत्वाऽथवा द्वे फले मानसे मनोविकारे वमनं पिबेत्। अथवा तत्शृतक्षीरजं सर्पिर्धामार्गवफलसाधितम्। क्षीरोद्भवं फलादिभिः साधितं मदनफलजीमूतकेक्ष्वाकुधामार्गवकोशातकीकुटजैः षड्भिः पक्वं मानसे वमनार्थं पिबेत् ॥ २७—२९ ॥

क्ष्वेड इति। क्ष्वेडस्तिक्तकोशातक्यतितीक्ष्णोष्णकटुकत्वात्कुष्ठादिषु प्रगाढेषु अत्यन्तचिरकालजत्वाद् दृढेषु प्रगूढेषु प्रशस्यते। पृथगिति। पृथक् फलादिषट्कस्य मदनफलेक्ष्वादिकस्य क्वाथे मांसमनूपजं कोशातक्या समं तया तुल्यं सिद्धं पक्वं तद्रसं तस्य मांसस्य रसं लवणान्वितं पिबेत्। फलादीति। फलादिपिप्पल्योमदनफलजीमूतेक्ष्वाकु-

च्वेडक्काथे पिबत् सिद्धं मिश्रमिक्षुरसेन वा ॥ ३२ ॥
कुटजं सुकुमारेषु पित्त-रक्त-कफोदये ।
ज्वरे विसर्पे हृद्रोग खुडे कुष्ठ च पूजितम् ॥ ३३ ॥
सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत् कौटजं बीजं युक्तं क्षशरयाथवा ॥
सप्ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत् पृथक् ।
फल-जीमूतकेच्वाकु-जीवन्ती-जीवकोदकैः ॥ ३४ ॥
वमनौषधमुख्यानामिति कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ३५ ॥
इति कल्पस्थाने वमनकल्पोनाम प्रथमोऽध्यायः ॥ १ ॥

---

फलमध्यबीजानि ताभिस्तुल्यमनूपं मांसं समच्वेडरसेन सिद्धं वा पिबेत् । यद्वेक्षुरसेन मिश्रं च्वेडक्काथ सिद्धमनूपजं मांसरसं सलवणं पिबेत् ॥ २९—३२ ॥

कुटजमिति । कुटजं सुकुमारेष्वत्यन्तवमनासहिष्णुषु पित्तरक्तकफोदयेऽतिशयेनाधिके तस्मिंस्तथा ज्वरादिषु वमनं श्रेष्ठम् । सर्षपाणामिति । सर्षपादीनां पृथक् तोयेन क्वाथेन सैन्धवस्य च जलेन कुटजबीजं पाययेत् । अथवा क्षशरया सह कौटजं पाययेत् । अथवा सप्ताहमर्कदुग्धाक्तं कुटजबीजचूर्णं पृथङ्मदनफलाद्युदकैः पाययेत् । वमनेति । वमनौषधमुख्यानां छर्दिषु प्रधानानामौषधानामित्येवं प्रकारेण कल्पस्य दिग्गतिरीरिता; कल्पमार्ग उदितः । अनेन बीजेनानया दिशा सुमतिरन्यान्यपि वमनौषधानि कल्पयेदिति ॥ ३३—३५ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्व्वाङ्गसुन्दराख्यायां कल्पस्थाने वमनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

अथातो विरेचनकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ २ ॥
सेदानीमौषधैर्युक्ता वात-पित्त-कफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्व्वरोगजित् ॥ ३ ॥
द्विधा ख्यातञ्च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ।
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ॥ ४ ॥
मूर्च्छा-सम्मोह-हृत्कण्ठ-कर्षण-क्षणन-प्रदम् ।
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बह्वौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥

---

वमनादनन्तरं विरेचनस्योपयोगः; इति वमनकल्पादनन्तरं विरेचनकल्पः प्रक्रम्यत इत्याह,—अथात इति । कल्पनं कल्पो योजना । विरेचनमधोभागेन दोषनिर्हरणं तस्य कल्पो विरेचनकल्पस्तं व्याख्यास्यामः । शेषं पूर्व्ववत् । दन्तीद्रवन्त्यादिभ्यः सर्व्वेभ्योऽपि विरेचनद्रव्येभ्यो निरपायत्वाद्विरेचनसाध्ये व्याधावनिषिद्धप्रसरत्वात् पूर्व्वं त्रिवृताया उपन्यासः ॥ १ ॥

कषायाइति । अनेन चास्याः स्वरूपकथनम् । सेदानीमिति । सैवंगुणा त्रिवृदधुना वातपित्तकफापहैरौषधैर्युक्ता कल्पविशेषत्वं प्राप्य विरेचनसाध्यव्याधिविषयसर्व्वरोगजिज्जायते । द्विधेति । तस्यास्त्रिवृतो मूलं द्विप्रकारम् । एकं श्याममपरं श्यामारुणम् । श्यामं मूलं श्यामा त्रिवृत् श्यामारुणं मूलमिति त्र्याख्यं द्विसंज्ञम् । तयोः श्यामश्यामारुणयोर्यद्व्यारुणं मूलं तद्वरतरम् । सामर्थ्याद्वरं श्यामारुणं यन्मूलं तन्निरपायत्वात् सुकुमारादिषु हितम् । न श्यामं सापायत्वात् ॥ २—४ ॥

सापायत्वे विशेषेण हेतुमाह,—मूर्च्छेति । श्यामं मूलं मूर्च्छादिहृत्कण्ठकर्षणक्षणनप्रदम् । तत्तीक्ष्णत्वादाशुकारित्वाच्च सापायत्वमस्य तदेवं रूपमपि श्यामं शस्यते क्रूरकोष्ठादिविषये । गम्भीरानुगतमिति । गम्भीरानुगतं गूढं कृत्वा भूमावन्तःप्रविष्टं

गम्भीरानुगतं श्लक्ष्णमतिर्य्यग्विसृतञ्च यत् ।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६ ॥
अथ काले तु तच्चूर्णं किञ्चिन्नागरसैन्धवम् ।
वातामये पिबेदम्लैः पित्ते साज्य-सिता-मधु ॥
क्षीर-द्राक्षेक्षु-काश्मर्य्य-स्वादुस्कन्ध-वरारसैः ।
कफामये पीलुरस-मूत्र-मद्याम्लकाञ्जिकैः ।
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ॥ ७ ॥
त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ।
मधु-त्रिजात-संयुक्तो लेहो हृद्यं विरेचनम् ॥ ८ ॥
अजगन्धा-तुगाक्षीरी-विदारी-शर्करा-त्रिवृत् ।
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वर-स्तम्भ-पिपासा-दाहपीड़ितः ॥ ९ ॥
लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुगण्डिकाः ।
एकीकृत्य पचेत् स्विन्नं पुटपाकेन भक्षयेत् ॥ १० ॥
त्वगेलाभ्यां समा नीली तैस्त्रिवृत् तैश्च शर्करा ।
चूर्णं फलरस-क्षौद्र-सक्तुभिस्तर्पणं पिबेत् ॥

---

तथा श्लक्ष्णमपरुषं तथाऽतिर्य्यग्यातं स्पष्टं कृत्वा भूमौ गतमेवंविधं त्रिवृताया मूलं गृहीत्वा तत्काष्ठं विसृजेत् । त्वचं शुष्कां कृत्वा स्थापयेत् ॥ ५—६ ॥

अथेति । अथ काले विरेचनप्रस्तावे ततो मूलत्वचश्चूर्णमीषन्नागरसैन्धवमम्लैः काञ्जिकादिभिर्व्वातविकारे पिबेत् । पैत्तिकविकारे सह घृतशर्करामधु तच्चूर्णं क्षीरेण द्राक्षादिरसैर्वा पिबेत् । कफविकारे तच्चूर्णं पीलुरसादिभिः पिबेत् । पञ्चकोलादिभिश्चूर्णैश्च कफघ्नैर्युक्तम् । कथं ? युक्त्या युक्तं । पञ्चकोलादिचूर्णानां योगो नातिव्याप्तिर्नवाऽव्याप्तिः पञ्चकोलादिचूर्णेन त्रिवृताचूर्णस्य सम्यग्योगः स्यादित्यर्थः । आदिशब्देनान्येषां पाचनदीपनानां पञ्चकोलसदृशानां चित्रकादीनां ग्रहणम् ॥ ७ ॥

त्रिवृदिति । त्रिवृतः कषायेण कल्केन कषायेण वा साधितः सशर्करो लेहः शीतो मधुत्रिजातसंयुक्तो हृद्यं विरेचनं स्यात् । अत्र च कासचिकित्सितोक्तकण्टकारिकालेहवत् प्रमाणं निरूपयितव्यम् । अजगन्धेति । अजगन्धादिचूर्णं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते सन्निपातज्वरादिपीड़ितः सन् । लिम्पेदिति । इक्षुगण्डिकां द्विधाकृत्य पाटयित्वा त्रिवृतयान्तर्लिम्पेत् । अनन्तरमेकीकृत्य पुटपाकेन स्विन्नं भक्षयेत् । त्वगिति

वात-पित्त-कफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ ११ ॥
विड़ङ्गतण्डुल-वरा-यावशूक-कणा-त्रिवृत् ।
सर्व्वेभ्योऽर्द्धेन तल्लीढं मध्वाज्येन गुड़ेन वा ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून् ॥ १२ ॥
विड़ङ्ग-पिप्पली-मूल-त्रिफला-धान्य-चित्रकम् ।
मरीचेन्द्रयवाजाजी-पिप्पली-हस्तिपिप्पली: ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैल-त्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुड़ार्द्धतुलान्वितान् ।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः ॥
कुष्ठार्शःकामला-गुल्म-मेहोदर-भगन्दरान् ।
ग्रहणी-पाण्डुरोगांश्च हन्ति पुंसवनञ्च सः ॥
गुड़ः कल्याणको नाम सर्व्वेष्वृतुषु यौगिकः ॥ १३ ॥
व्योष-त्रिजातकाम्भोद-कृमिघ्नामलकैस्त्रिवृत् ।
सर्व्वैः समाः समसिताः क्षौद्रेण गुटिकाः कृताः ॥

---

त्वगेलाभ्यां तुल्या नीली तैश्च तुल्या त्रिवृत् । सर्व्वैश्च तुल्या सिता; चूर्णं फलरसक्षौद्र-सक्तुभिस्तर्पणं पिबेत् । वातपित्तकफो० षु रोगेष्वल्पाग्निषु च नरेषु तथा सुकुमारेषु विरेचनमेतन्निरपायम् ॥ ८—११ ॥

विडङ्गेति । विडङ्गतण्डुलादयः समांशाः सर्व्वेभ्योऽर्द्धेन त्रिवृत् तदेतच्चूर्णं मधुघृताभ्यां लीढं गुडेन वाऽऽस्वादितं गुल्मादीन् कफवातोत्थांश्चान्यानपि गदान् बहून् परिमार्ष्टि पराकरोति । विडङ्गपिप्पलीति । विडङ्गादीनि कार्षिकाणि; त्रिवृताचूर्ण-तिल-तैले पृथगष्टपलप्रमाणे; आमलकफलरसप्रस्थांस्त्रीन् गुड़पलानि पञ्चाशत्, मृद्वग्निना पक्त्वा तस्मान्मात्रामयन्त्रणो यन्त्रणारहितः सन्भक्षयेत् । स च भक्षितः कुष्ठादीन् हन्ति पुंसवनञ्च स्यात् । गुडोऽयं कल्याणसंज्ञः सर्व्वेष्वृतुषु यौगिको युज्यते ॥ १२—१३ ॥

व्योषेति । अविपत्तिरयं योगः प्रयोक्तव्यो व्योषादिभिः समभागैः सर्व्वैर्द्रव्यैस्त्रिवृत्-समा सा च त्रिवृत्तुल्यशर्करा एवमेताः क्षौद्रेण गुटिकाः कृता मूत्रकृच्छ्रादिषु शस्यन्ते ।

मूत्रकृच्छ्र-ज्वर-च्छर्दि-कास-शोफभ्रमक्षये ।
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्व्वविषेषु च ॥
अविपत्तिरयं योगः प्रशस्तः पित्तरोगिणाम् ॥ १४ ॥
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
क्षौद्र-द्राक्षारसोपेतं वर्षाकाले विरेचनम् ॥ १५ ॥
त्रिवृद्दुरालभा-मुस्त-शर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं सातलं जलदात्यये ॥ १६ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
स्वर्णक्षीरीञ्च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ १७ ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ १८ ॥
त्रिवृत्त्रायन्ति-हवुषा-सातला-कटुरोहिणीः ।
स्वर्णक्षीरीञ्च सञ्चूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ॥
एष सर्व्वर्त्तुको योगः स्निग्धानां मलदोषहृत् ॥ १९ ॥
श्यामा-त्रिवृद्दुरालभा-हस्तिपिप्पलि-वत्सकम् ।
नीलिनी-कटुका-मुस्ता-श्रेष्ठा-युक्तं सुचूर्णितम् ।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्व्वदा ॥ २० ॥
ज्वर-हृद्रोग-वातासृगुदावर्त्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ २१ ॥

---

त्रिवृतेति। त्रिवृदादिकं क्षौद्रद्राक्षारससंयुक्तं प्रावृषि सुखं विरेचनम् । त्रिवृदिति । त्रिवृद्दुरालभादिकं द्राक्षाजलेन शरदि विरेचनम्। त्रिवृतामिति। त्रिवृतादिकं चूर्णमुष्णाम्बुना सह हेमन्ते पिबेत्। त्रिवृतां शर्करेति। त्रिवृच्छर्करा समा ग्रीष्मर्त्तौ विरेचनम्। त्रिवृत्त्रायन्तीति। त्रिवृतादीनि संचूर्ण्य त्र्यहं गोमूत्रे भावयेत्। एष योगः सर्व्वर्त्तुष्वपि स्निग्धानां नराणां मलदोषस्य हारकः स्यात्। श्यामेति। श्यामाद्यं सञ्चूर्णीकृतं मांसरसघृतोष्णाम्बुभी रूक्षाणामपि सर्व्वकालं शस्तम्। अपि शब्दात् स्निग्धानां शस्तमेव ॥ १४—२० ॥

ज्वरेति। ज्वरादिष्वन्येभ्यस्तद्विषयोक्तेभ्यो विरेचनद्रव्येभ्यो राजवृक्षोऽतिशयेन पथ्यः। किम्भूतः? मृदुर्म्मधुरशीतलश्च। बालइति। बालादौ मृदुत्वादनपायित्वाच्च विशेषेण

बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ २२ ॥
फलकाले परिणतं फलं तस्य समाहरेत् ।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥
सप्तरात्रात् समुद्धृत्य शोषयेच्चातपे ततः ।
ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ २३ ॥
द्राक्षारसेन तं दद्याद्दाहोदावर्त्तपीड़िते ।
चतुर्व्वर्षे सुखं बाले यावद् द्वादशवार्षिके ॥ २४ ॥
चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्धिमम् ।
दधिमण्ड-सुरामण्ड-धात्रीफलरसैः पृथक् ॥
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ॥ २५ ॥
दन्तीकषाये तन्मज्ज गुड़ं जीर्णञ्च निक्षिपेत् ।
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ॥ २६ ॥
त्वचं तिल्वकमूलस्य त्यक्त्वाभ्यन्तरवल्कलम् ।
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ॥
रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।

---

चतुरङ्गुलो योज्यः । फलेति । तस्य शम्पाकस्य फलकाले परिणतं पक्वं फलं समाहरेत् सङ्गृह्णीयात् । तेषां फलानां गुणवतां सुनिष्पन्नानां भारं पलशतं विंशतिः बालुकासु विनिक्षिपेत् । सप्तरात्रादूर्द्धं सिकताभ्य उद्धृत्यानन्तरमातपे शोषयेत् । ततोऽनन्तरं तेभ्यः फलेभ्यो मज्जानमुद्धृत्य गृहीत्वा पात्रे भाण्डे शुचौ शुद्धे स्थापयेत् ॥ २१—२३ ॥

द्राक्षारसेनेति । तं मज्जानं द्राक्षारसेन दद्यात् । दाहाद्यार्त्ते नरे चतुर्व्वर्षे बाले सुखेन तद्विरेचनं यावद्द्वादशवार्षिके बाले सुखं विरेचनमिदम् । चतुरङ्गुलेति । अथवा राजवृक्षमज्ज्ञो हिमं शीतकषायं दधिमण्डादिभिः पृथग्युक्तमथवा काञ्जिकेनाथवा कल्केन त्रिवृता सम्बन्धिना युक्तं पाययेत् । दन्तीति । दन्तीकषाये तन्मज्ज कर्णिकारस्य मध्यानि गुडं जीर्णञ्च विनिक्षिपेत् । तं स्थितमरिष्टं मासं पाययेत् । पक्षं वा स्थितम् ॥ २४—२६ ॥

त्वचमिति । तिल्वकमूलस्य त्वचं त्यक्त्वा मध्यवल्कलं विशोष्य तथा चूर्णयित्वा ततश्चूर्णाद्द्वौ भागौ रोध्रस्यैव कषायेण गालयेत् । ततोऽनन्तरमवशिष्टो यस्तृतीयो भागस्तत्चूर्णात् तं तेन कषायेण वस्त्रगालितेन भावयेत् । अनन्तरं वस्त्रगालितकषायेण

कषाये दशमूलस्य तं भागं भावितं पुनः ॥
शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ।
मस्तु-मूत्र-सुरामण्ड-कोल-धात्रीफलाम्बुभिः ॥ २७ ॥
तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥ २८ ॥
सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम् ।
आश्वेव कोष्ठविभ्रंशान्नैव तां कल्पयेदतः ।
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ २९ ॥
कल्प्या गुल्मोदर-गर-त्वग्रोग-मधुमेहिषु ।
पाण्डौ दूषिविषे शोफे दोषविभ्रान्तचेतसि ॥
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ॥ ३० ॥
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ।
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ॥
बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ।

---

भावितं पुनः कषाये दशमूलस्य भावितमनन्तरम् शुष्कचूर्णं ततश्च पणात् पाणितलं कर्षं मस्तुगोमूत्रादिकेन पिबेत् । कोलं बदरं । धात्रीफलमामलकम् । तयोरम्बुनी स्वरसौ । तद्भावनौषधप्रमाणञ्च शिलाजतुनः कल्पवत् कल्पयेत । शिलाजतुकल्पञ्च वक्ष्यति समगिरिजमष्टगुणितं निःक्वाथ्यं भावनौषधमित्यादि । तस्मादत्र तिल्वकत्वचो भाव्यौषधस्य रोध्रस्य भावनौषधं समं देयम् । ततोऽष्टगुणं जलं देयम् । तच्च क्वथनेनाष्टांशशेषां कार्य्यमिति । एवमन्यत्राप्यनिर्दिष्टप्रमाणानां भाव्यद्रव्यभावनाद्रव्याणां तोयावशिष्टान परिमाणं बोध्यम् ॥ २७ ॥

तिल्वकस्येति । रोध्रस्य कषायेण कल्केन च सशर्करो घृतान्वितो लेहः स्यात् । स च लेहः श्रेष्ठं विरेचनम् । सुधेति । सुधा गुडा दोषाणां महान्तमपि सञ्चयं निहन्ति । एवंगुणामपि तां सुधां भिषग्मृदुकोष्ठादिषु न कल्पयेत् । शीघ्रमेव कोष्ठविभ्रंशादिति । कल्पयेदित्यतिसर्जने लिङ् । तर्हि क्वायं प्रयोज्येत्याह ।—कल्प्येति । गुल्मादिषु कल्प्या सा स्नुक्तीक्ष्णैर्बहुभिः कण्टकैश्चिता श्रेष्ठा स्यात् ॥ २८—३० ॥

द्विवर्षामिति । तां सुधां द्विवर्षामथ त्रिवर्षां विशेषेण शिशिरान्ते कार्य्यवशादन्यस्मिन्नपि ऋतौ शस्त्रेण पाटयित्वा ततः सुधातः क्षीरमुद्धारयेत् । द्वे वर्षे प्रमाणमस्या इति ठक् । तस्य रसाल्लुगिति लुक् । ततश्च ठक् । ततोऽनन्तरं बिल्वादीनां कण्टकारि-महतीकण्टकार्योर्वा

मिश्रयित्वा सुधाचीरं ततोऽङ्गारेषु शोषयेत् ॥
पिबेत् कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ २१ ॥
चित्रतादीन्नव वरां स्वर्णचीरीं ससातलाम् ।
सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ॥ २२ ॥
तद्वद्व्योषोत्तमाकुम्भनिकुम्भादीन् गुडाम्बुना ॥ २३ ॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ।
स्रे ष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ २४ ॥
अच्चमात्रं तयोः पिण्डं मदिरालवणान्वितम् ।
हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ २५ ॥
दन्तिदन्तस्थिरं स्थूलं मूलं दन्तीद्रवन्तिजम् ।
आताम्र-श्याव-तीक्ष्णोष्णमाशुकारि विकाशि च ॥
गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनम् ॥ २६ ॥
तत् चौद्रपिप्पलीलिप्तं स्वेद्यं मृद्दर्भवेष्टितम् ।
शोष्यं मन्दातपेऽग्न्यर्कौ हतो ह्यस्य विकाशिताम् ॥
तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ।

---

ध्येन एकश एकैनैकेन समं मेलयित्वा सुधाचीरमनन्तरमङ्गारेषु तदुभयमपि शोषयेत् । ततो गुटिकां कृत्वा यथायोगं मस्त्वादिभिः पिबेत् ॥ २१ ॥

चित्रतादीनिति । चित्रतादीन्नवेति चित्रच्छ्यामा राजवृचस्तिल्वकश्च तथा सुधा शङ्खिनी सप्तला दन्ती द्रवन्तीति । तदेतान् चित्रतादींस्तथा त्रिफलां स्वर्णचीरीं सातलां च सप्त वासरान् स्नुक्पयःपीतान् स्नुक्चीरभावितान् मांसरसेन घृतेन वा पिबेत् । तद्वदिति । तथैव व्योषादीन् गुड़ाम्बुना पिबेत् । नातिशुष्कमिति । शङ्खिन्याः फलं निस्तुषीकृतं नातिशुष्कं कार्य्यम् । सप्तलायाश्च मूलं ग्राह्यं । ते च शङ्खिनीफलसातलामूले तीक्ष्णविकाषिणी श्लेष्मामयाद्येषु कल्पयेत् । अच्चमात्रमिति । तयोः शङ्खिनीसप्तलयोः पूर्वोक्तयोः कर्षमात्रं पिण्डं सुरालवणयुक्तं वातकफजहृद्रोगादिषु कल्पयेत् ॥२२—२५॥

दन्तीति । दन्तिनी दन्तस्तद्वत् स्थिरं स्थूलं च दन्तीद्रवन्त्युद्भवं मूलं किञ्चित्ताम्र-श्यावतीक्ष्णोष्णमाशुकारि विकाशि चेत्यादिना तत् स्वरूपोक्तिः । तत् चौद्रेति । तच्च चौद्रपिप्पलीभ्यां लिप्तं मृद्दर्भवेष्टितं स्वेदितं पश्चान्मन्दातपे शोष्यम् । किमेवं क्रियत

अभिष्यसतनुगुल्मी प्रमेही जठरी गरी ॥
गोमृगाजरसैः पाण्डुः क्रमिकोष्ठी भगन्दरी ॥ ३७ ॥
सिद्धं तत् क्वाथकल्काभ्यां दशमूलरसेन च ।
विसर्पविद्रध्यलजीकच्छादादाहान् जयेद् घृतम् ॥
तैलं तु गुल्म-मेहार्शो-विबन्ध-कफ-मारुतान् ।
महास्नेहः शकृच्छ्रुक्र-वातसङ्गानिलव्यथाः ॥ ३८ ॥
विरेचने मुख्यतमा नवैते त्रिवृतादयः ॥ ३९ ॥
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ४० ॥
गुड़स्याष्टपले पथ्या विंशतिः स्यात् पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥
प्रकल्प्य मोदकानेवं दशमे दशमेऽहनि ।
उष्णाम्भोऽनु पिबेत् खादेत्तान् सर्व्वान् विधिनाऽमुना ॥
एते निःपरिहाराः स्युः सर्व्वव्याधिनिवर्हणाः ।
विशेषाद् ग्रहणी-पाण्डु-कण्डू-कोठार्शसां हिताः ॥ ४१ ॥
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।
कुर्य्यात् संश्लेष-विश्लेष-काल-संस्कार-युक्तिभिः ॥ ४२ ॥

---

इत्याह । यस्मादग्रर्कावस्य विकाश्रितां हतः । तच्च मस्त्वादिभिः पिबेत् । अभिष्यन्ददेहादिपाण्ड्वामयीक्रमिकोष्ठी भगन्दरी च गोमृगाजमांसरसैः पिबेत् ॥३६—३७ ॥

सिद्धमिति । तस्य मलकस्य क्वाथकल्काभ्यां दशमूलरसेन च सिद्धं घृतं विसर्पादीन् जयेत् । तैलं सुसिद्धं गुल्मादीन् जयेत् । महास्नेहः शकृदादिसङ्गादीन् जयेत् । विरेचन इति । एते त्रिवृतादयो विरेचने नव श्रेष्ठतमाः । हरीतकीमिति । यथा त्रिवृदादेर्विधानमुक्तम्, अथ काले तु तच्चूर्णं किञ्चिन्नागरसैन्धवमित्यादि, तथैव हरीतक्या अपि विधातव्यमित्यर्थः । गुड़स्येति । गुड़स्याष्टपले हि पथ्याविंशतिर्दन्तीचित्रकयोः पलं पलं प्रत्येकं स्यात् । पिप्पलीत्रिवृतोः कर्षावुभौ । दश मोदकानेवं प्रकल्प्यैकमेकं मोदकं दशमे दशमे दिने योजयेत् । पश्चादुष्णाम्बु पिबेत् । अमुना विधिना सर्वान् मोदकान् भक्षयेत् । एते मोदका निःपरिहारास्तथाऽशेषव्याधिनिवर्हणाः स्युः । विशेषेण ग्रहण्यादीनां हिताः । सम्बन्धमात्रस्य विवक्षितत्वादत्र षष्ठी । अन्यथा तु हितयोगे चतुर्थी स्यात् ॥ ३८—४१ ॥

अल्पस्येति । अल्पस्य वीर्येण मात्रया वा कदाचिदल्पौषधयोगस्य केनचित्तत्वीर्य्यौषधसंश्लेषेण तस्य महार्थत्वं कार्यम् । तथा कालेन मध्याह्नादिना तथा संस्कारेण

त्वक्केसराम्रातक-दाड़िमैला-सितोपला-माच्चिक-मातुलुङ्गैः ।
मद्यैश्च तैस्तैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि ॥४३॥

इति कल्पस्थाने विरेचनकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

तद्योग्येन गुणान्तरोत्पादनेन तथा युक्त्या योजनाप्रकारविशेषेण तथा वीर्येण प्रभूतस्य मात्रयाऽथवा महार्थस्य कदाचित् केनचिद्द्रव्येण विश्लेषं कृत्वा तस्याल्पकर्मत्वं कार्यम् । तथा कालेन प्रत्यषादिना मन्दवीर्येण तथा संस्कारेण गुणान्तराधानेन तथा युक्त्या तादृश्याऽल्पशक्तित्वलक्षणं कर्म कार्यम् । त्वगिति । इति त्वक्केशरादिभिस्तैस्तैरन्यैश्च तथाविधैरनुकूलैर्मानसप्रियैरौषधैर्युक्तानि विरेचनानि देयानि । एवं कृते सम्यग्योगो विरेचनस्य स्यादिति । उपजातिवृत्तम् ॥ ४२ —४७ ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदय-टीकायां सर्वाङ्गसुन्दराख्यायां कल्पस्थाने विरेचनकल्पो नाम
द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातो वमन-विरेचन-व्यापत्सिद्धिं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
वमनं मृदुकोष्ठेन क्षुद्वतात्यकफेन वा ।
अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥

---

अथातो वमनविरेचनकल्पाभ्यामनन्तरं तद्व्यापत्सिद्धिं ब्रूते । अथात इति । वमनविरेचनयोर्व्यापद् यथाशास्त्रमननुष्ठीयमानेन याऽगदोत्पत्तिस्तस्या वमनविरेचनव्यापदः सिद्धिः साधनं चिकित्सितं तां वर्णयिष्यामः । वमनमिति । एवंविधेन पुरुषेणेवम्विधं वमन पीतमधः प्रयाति । तस्मिन् वमनेऽधस्तात् प्रयाते सतीष्टहानिरभिप्रेतस्य वमनकार्यस्यानिष्पत्तिः । तथा मलस्य वमनसाध्यस्य श्लेष्मणः केवलस्यान्यदोषयुक्तस्य वा उदयः स्वस्थानस्थस्यैवामयकरणम् । पीतवमनं ईदृशं पुरुषमथवावान्तं पुनः स्निग्धं वामयेत् ।

पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ।
वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्द्ध्वं विरेचनम् ।
अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ।
तत्र पूर्वोदिता व्यापत् सिद्धिश्च न तथापि चेत् ॥
आशये तिष्ठति ततस्तृतीयं नावचारयेत् ।
अन्यत्र सात्म्यात् हृद्याद्वा भेषजान्निरपायतः ॥ ३ ॥
अस्निग्धस्विन्नदेहस्य पुराणं रूक्षमौषधम् ।
दोषानुत्क्लेश्य निर्हर्तुमशक्तं जनयेद्गदान् ॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं तृषम् ।
पिण्डिकोद्वेष्टनं कण्डूमूर्व्वोः सादं विवर्णताम् ॥
स्निग्धस्विन्नस्य चात्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ।
शीतैर्वा स्तब्धमामैर्वा दोषानुत्क्लिश्य नाहरेत् ॥
तानेव जनयेद्रोगानयोगः सर्व्व एव सः ॥ ४ ॥

---

पूर्वं स्निग्धमपीति पुनःशब्दस्यार्थः । कथं वामयेत् ? स्मरन् पूर्वमतिक्रमं यतोऽतिक्रमात् पीतवमनोऽप्यसौ पुरुषो वमनकर्मणः फलं नाप्तवान् । तमतिक्रममपराधं स्मरन् चेतसि कुर्वाणो नत्वेवमेवं वामयेत् ॥ १—२ ॥

अजीर्णिन इति । अजीर्णिनस्तथा बहुश्लेष्मिणो विरेचनमतितीक्ष्णोष्णलवणमहृद्यमतिप्रभूतं च पीतमूर्द्ध्वं याति । तत्र तस्मिन्नूर्द्ध्वं व्रजति पूर्वोक्ता व्यापत् "इष्टहानिर्मलोदयः" इति । तत्र तथैव सिद्धिश्चिकित्सितम् । तथानन्तरं विरेचनस्योर्द्ध्वं गमनादविरिक्तं पुनः स्निग्धं विरेचयेत् । तथैव पूर्वं विरेचनातिक्रमं स्मरन्नितोऽपराधात् पूर्वं विरेचनेन विरिक्तस्तमतिक्रमं परिहरन् विरेचयेदित्यर्थः । तथा तदप्येवमनुष्ठीयमाने तद्विरेचनौषधं पीतं यद्याशये कोष्ठलक्षणे न तिष्ठति तत्र स्थितिं न बध्नाति, ऊर्द्ध्वमेव पुनरेति, ततस्तृतीयं विरेचनौषधं मदनारग्वधादि नावचारयेत् । यदि तु सात्म्यं हृद्यं निरपायं च भेषजं तदा तृतीयमप्यवचारयेत् ॥ ३ ॥

अस्निग्धेति । अस्निग्धस्विन्नशरीरस्य पुराणं रूक्षं विरेचनौषधमुपयुक्तं दोषानुत्क्लेश्य प्रच्याव्य निर्हर्तुमशक्तं विभ्रंशादिकान् गदान् जनयेत् । अथवा स्निग्धस्विन्नस्य चौषधमल्पं मात्राहीनं दीप्ताग्नेर्जीर्णं स्यात्, परिणतं शीतैर्वास्तब्धमामैर्वा स्वं भेषजं तदा दोषानुत्क्लेश्य नाहरेत् पूर्वोक्तानेव रोगान् जनयेत् । स एवम्भूतः सर्व्व एवायोगः ॥ ४ ॥

तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।
निरूढं जाङ्गलरसैर्भोजयित्वाऽनुवासयेत् ॥
फल-मागधिका-दारु-सिद्ध-तैलेन मात्रया ।
स्निग्धं वातहरैः स्नेहैः पुनस्तीच्णेन शोधयेत् ॥ ५ ॥
बहुदोषस्य रूचस्य मन्दाग्नेरल्पमौषधम् ।
सोदावर्त्तस्य चोत्क्लेश्य दोषान् मार्गं निरुध्य तैः ॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम् ।
श्वासं विण्मूत्रवातानां सङ्गं कुर्य्याच्च दारुणम् ॥
अभ्यङ्गस्वेद-वर्त्यादि सनिरूहानुवासनम् ।
उदावर्त्तहरं सर्व्वं कर्माध्मातस्य शस्यते ॥ ६ ॥
पञ्चमूल-यवक्षार-वचा-भूतिक-सैन्धवैः ।
यवागूः सुकृता शूल-विबन्धानाह-नाशनी ॥ ७ ॥
पिप्पली-दाड़िम-क्षार-हिङ्गु-शुण्ठ्यम्लवेतसान् ।
ससैन्धवान् पिबेन्मद्यैः सर्पिषोष्णोदकेन वा ।
प्रवाहिकापरिस्रावे वेदनापरिकर्त्तने ॥ ८ ॥
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥
हिक्का-पार्श्वरुजा-कास-दैन्य-लालाक्षिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान् कटकटाययन् ॥ ९
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।

---

तमिति । तमुत्क्लिष्टदोषं तैललवणाभ्यक्तं प्रस्तरसङ्कराख्यैः स्वेदैः स्विन्नं तथा निरूढं जाङ्गलरसैर्भोजयित्वा फलादिसिद्धतैलेन मात्रयानुवासयेत् । वातहरैः स्नेहैः स्निग्धं पुनस्तीक्ष्णेन विरेचनेन विशोधयेत् । बहुदोषस्येति । बहुदोषस्य रूक्षस्य तथा मन्दाग्नेरल्पमौषधं योजितं तदोदावर्तवतो दोषानुत्क्लेश्य मार्गान् निरुध्य तैश्च दोषैर्भृशं नाभिमाध्मापयेत् । तथा पृष्ठादिरुजादीन् कुर्यात् । आध्मातस्य नरस्याभ्यङ्गादिकं कर्म ह्युदावर्तहरं सर्वं शस्यते ॥ ५—६ ॥

पञ्चमूलेति । पञ्चमूलादिभिः सुकृता यवागूः शूलादिनाशनी । पिप्पलीति । पिप्पल्यादीन्मद्येन सर्पिषोष्णाम्बुना पिबेत् प्रवाहिकादिषु । पीतौषधस्येति । पीतौषधस्य

मधुरैः पित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम् ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निञ्च बलञ्चास्य क्रमेणाभिप्रवर्त्तयेत् ॥ १० ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफेऽन्यथा ॥ ११ ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्त्तिभेदनैः ।
तत्र वातहरं सर्व्वं स्नेहस्वेदादि शस्यते ॥ १२ ॥
बहुतीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम् ।
हृत्वाऽऽशु विट्पित्त-कफान् धातूनास्रावयेद्द्रवान् ॥ १३ ॥
तत्रातियोगे मधुरैः शेषमौषधमुल्लिखत् ।
योज्योऽतिवमने रेको विरेके वमनं मृदु ॥
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥ १४ ॥
अञ्जनं चन्दनोशीर-मज्जासृक्-शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ १५ ॥

---

वेगानां निग्रहाद्वातादयः कुपिताः हृदयं गत्वा घोरं हृद्ग्रहं कुर्वन्ति हिक्कादियुक्तम् स च हृद्ग्रहादिमान् । जिह्वं खादति निःसंज्ञः, सन् तथा दन्तान् कटकटायते । न गच्छेदिति । तत्र तस्मिन्नवस्थाविशेषे भिषगाश्वेव तं रोगिणं संशयं हित्वा वामयेत् । मधुरैः पित्तमूर्च्छार्त्तं वामयेत् । कफमूर्च्छितं कटुभिर्वामयेत् । वामयित्वा चास्य दोषशेषं पाचनीयैर्द्रव्यैर्विपाचयेत् । कायाग्निं बलं च क्रमेणास्याभिप्रवर्धयेत् ॥ ७—१० ॥

पवनेनेति । यस्यातिवमतः पवनेन हृदयं पीड्यते तस्मै रोगिणे स्निग्धाम्ललवणं दद्यात् । पित्तकफे कुपितेऽन्यथा मधुरशीतादिकं दद्यादित्यर्थः । पीतौषधस्येति । पीतभेषजस्य वेगानां निग्रहेण कफेन वा रुद्धः अतिविशुद्धस्य वा वायुरङ्गानि गृह्णाति स्तम्भादिभिः । तत्र सर्व्वं वातहरं स्नेहस्वेदादि शस्यते । बहुतीक्ष्णमिति । क्षुधार्त्तस्य मृदुकोष्ठस्य नरस्य बहुतीक्ष्णञ्च भेषजं विट्पित्तकफांश्छीघ्रमेव हृत्वा द्रवान् धातूनास्रावयेत् ॥ ११—१३ ॥

तत्रेति । तस्मिन् विरेचनातियोगे मधुरैर्द्रव्यैः शेषं विरेचनद्रव्यमुद्धरेत् । योज्य इति । अतिवमने सति विरेको योज्यः । अतिविरेके च मृदु वमनं योज्यम् । परिषेकादिभिश्च शीतैस्तं विरेकं स्तम्भयेत् । आदिशब्दो जलार्द्रशीतमारुतादिग्रहणाय ]।

वमनस्यातियोगे तु शीताम्बुपरिषेचितः ।
पिबेत् फलरसैर्मन्थं सघृत-क्षौद्र-शर्करम् ॥
सोद्गारायां भृशं छर्द्यां मूर्व्वाया धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ १६ ॥
वमनेऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।
निःसृताम्तु तिल-द्राक्षा-कल्कलिप्तां प्रवेशयेत् ॥ १७ ॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च कालवित् ॥ १८ ॥
अतियोगाच्च भैषज्यं जीवं हरति शोणितम् ।
तज्जीवादानमित्युक्तमादत्ते जीवितं यतः ॥
शुने काकाय वा दद्यात्तेनान्नमसृजा सह ।
भुक्ते तस्मिन् वदेज्जीवमभुक्ते पित्तमादिशेत्
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ।

---

अञ्जनमिति । अञ्जनादिकं खाक्षचूर्णैः सह मन्थं परं विरेकातियोगहरं पिबेत् । वमनस्येति । वमनस्य त्वतियोगे शीताम्बुपरिषेचितः सन् फलरसैर्मन्थं घृतादियुक्तं पिबेत् । अतिशयेन सोद्गारे वमने सति मूर्व्वादिचूर्णं लेहयेत् । वमन इति । छर्द्दं यतोऽभ्यन्तरे जिह्वायां प्रविष्टायां सत्यां कवलग्रहाश्छागमांसरसाः स्निग्धादियुक्ताः मनःप्रिया हिताः । तथा तस्यान्तःप्रविष्टजिह्वस्याग्रेऽपरे नरा अम्लानि फलानि खादेयुः । निःसृताञ्च रसनां तिलद्राक्षाकल्केन लिप्तामन्तः प्रवेशयेत् ॥ १४—१७ ॥

वागिति । वाग्ग्रहादिषु वातरोगेषु घृतमांसोपसाधितां स्वच्छां यवागूं दद्यात् । स्नेहस्वेदौ च योजयेत् । अतियोगाच्चेति । अतियोगेन च यद्भेषजं जीवाख्यं शोणितं हरति तद्भैषज्यं जीवादानमिति गदितं यतस्तज्जीवितमादत्ते । पित्तरक्तयोर्गन्धवर्णानुवृत्तित्वसामान्यात् किमिदं रक्तं उत, पित्तमिति संशयः । तत्परीक्षार्थमाह । तेन विरेचनातियोगोद्भवेन रक्तेन मिश्रितमन्नं शुने वायसाय वा दद्यात् । तस्मिन् रक्तमिश्रितेऽन्ने भुक्ते सति जीवं वदेत् । अभुक्ते तस्मिन् विरेचनातियोगेरितं पित्तं ब्रूयात् । शुक्लं वस्त्रं तेन विरेचनातियोगोद्भवेन रक्तेन संशयरूपेण भावितमार्द्रीकृतमनन्तरमा-

प्रक्षालितं विवर्णं स्यात् पित्ते शुद्धन्तु शोणिते ॥ १९ ॥
तृष्णामूर्च्छामदार्त्तस्य कुर्य्यादामरणं क्रियाम् ।
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ॥
मृग-गो-महिषाजानां सद्यस्कं जीवतामसृक् ।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति ॥
तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत् ॥ २० ॥
श्यामा-काश्मर्य्य-मधुक-दूर्वोशीरैः शृतं पयः ।
घृतमण्डाञ्जनयुतं बस्तिं वा योजयेद्धिमम् ॥
पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥ २१ ॥
गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ॥ २२ ॥
विसंज्ञं श्रावयेत् साम वेणुगीतादिनिस्वनम् ॥ २३ ॥

इति कल्पस्थाने वमनविरेचनाव्यापत्-
सिद्धिर्नाम तृतीयोऽध्यायः ॥ ३ ॥

---

वानं शुष्कं कोष्णवारिणा प्रक्षालितं प्रकर्षेण धौतं पित्ते सति विवर्णं वस्त्रं स्यान्न शुद्धं । शोणिते तु सति प्रक्षालितं वस्त्रं शुद्धं स्यात् ॥ १८—१९ ॥

तृष्णेति । तृष्णाद्यार्त्तस्य शोणिते स्रवत्येव रक्तपित्तातिसारघ्नीं प्राणरक्षणीं शीघ्रं क्रियां कुर्य्यात् । अनेन च मरणतुल्याधिरूढत्वं द्योतयति । संशयेऽपि चिकित्सा कार्य्येति प्रागभ्यधायि । तत्र मृगादीनां जीवतां सद्यस्कं तत्क्षणोत्पन्नं रक्तं पिबेत् । किम्भूतम् ? जीवाभिसन्धानं जीवमभिसन्धीयतेऽनेनेति जीवाभिसन्धानम् । हि यस्मात्तद्रक्तं कर्त्तृभूतं जीवं कर्म आशु गच्छति प्राप्नोति । तदेतद्रक्तं दर्भमृदितमभिनवप्रसूतदर्भमृदितम् बस्तौ निवेशयेत् प्रक्षिपेत् ॥ २० ॥

श्यामेति । श्यामादिभिर्वा शृतं पयो घृतमण्डाञ्जनाभ्यां युक्तं बस्तिं हिमं शीतलं योजयेत् । अथवा पिच्छाबस्तिस्तत्समनुवासनं सुशीतं घृतमण्डेन स्वच्छेनाङ्गभवेन घृतस्योपरिभागस्थितेन देयम् । अस्यामेवातियोगोद्भवायामवस्थायां गुदभ्रंशः सम्भाव्यत इत्याह,—गुदमिति । गुदं भ्रष्टं कषायैश्च कषायरसनिष्पादितैः क्वाथैः स्तम्भयित्वा प्रवेशयेत् । विसंज्ञमिति । विसंज्ञं सम्पन्नं सामवेदवेणुगीतादीनां निस्वनं श्रावयेदिति ॥ २१—२३ ॥

इति श्रीमृगाङ्कदत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्व्वाङ्गसुन्दराख्यायां कल्पस्थाने तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः ।

अथातो दोषहरणसाकल्यं बस्तिकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

बलां गुडूचीं त्रिफलां सरास्नां द्विपञ्चमूलञ्च पलोन्मितानि ।
अष्टौ फलान्यर्द्धतुलाञ्च मांसाच्छागात् पचेदप्सु चतुर्थशेषम् ॥
पूतोयमानी-फल-बिल्व-कुष्ठ-वचा-शताह्वा-घन-पिप्पलीनाम् ।
कल्कं गुड़-क्षौद्र-घृतैः सतैलैर्युक्तः सुखोष्णो लवणान्वितश्च ॥
बस्तिः परं सर्व्वगदप्रमाथी स्वस्थे हितो जीवनबृंहणश्च ।
बस्तौ च यस्मिन् पठितो न कल्कः सर्व्वत्र दद्यादमुमेव तत्र ॥२॥

---

अथ दोषहरणसाकल्यं बस्तिकल्पं ब्रूते। अथात इत्यादि। बलामिति। बलादीनि प्रत्येकं पलोन्मितानि तथाष्टौ मदनफलानि प्रायेण पलं स्युः। छागमांसात् पञ्चाशत्पलान्यप्सु चतुर्भागावशेषं पचेत्। पूतश्च क्वाथो यमान्यादिभिः कल्कैस्तथा गुड़ादिभिर्युक्तः सुखोष्णो लवणयुतश्च बस्त्यर्थं परिकल्पितत्वाद्बस्तिः सर्व्वगदानामुपहन्ता स्वस्थे च हितः स्वास्थ्यानुवृत्तत्वाज्जीवनो बृंहणश्च। अत्र चतुर्थशेषग्रहणमनर्थकं; यतो वक्ष्यति, "क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषतः"। अत्रोच्यते वक्ष्यमाणपरिभाषाप्रमाणमत्र नाश्रीयत इति प्रतिपादनाय चतुर्थशेषोपादानं तेन निरूहयोग्यक्वाथार्थं द्रव्याच्चतुर्गुणं जलं क्षिप्त्वा चतुर्भागावशेषं ग्राह्यमितीहावतिष्ठते एवमन्यत्र निरूह उपयुज्यते। ये तु तन्त्रकाराभिप्रायमविदन्तः सरलाशयमुखास्ते सामान्यपरिभाषोक्तप्रमाणं जलं क्षिप्त्वा चतुरंशशेषं ग्राह्यमिति वदन्ति। शेषं स्थितं तथा यमान्यादिकल्कांस्य पलद्वयमात्रं ग्राह्यं स्वस्थे कल्कपलद्वयमिति वचनात् स्नेहश्चात्र क्वाथे चतुर्थांशः षष्ठांशोऽष्टमांशः क्रमेण वातपित्तकफेन योज्यः। उक्तञ्च। "ततः क्वाथचतुर्थांशं स्नेहं वाते प्रकल्पयेत्। पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिक" इति। मधुलवणे च यथा नात्यच्छता नातिलवणता च बस्तौ स्यात्तथा योजयितव्ये। उक्तञ्च मधुसैन्धवञ्चेति। बस्तौ च यत्र कल्को न पठितस्तत्रामुमेव कल्कं दद्यात्। उपजातिर्वृत्तमिन्द्रवज्रा च ॥ १—२ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य स पूर्व्वकल्कः।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्व्वानिलव्याधिहरः प्रदिष्टः॥३॥
बला-पटोलो-लघुपञ्चमूल-त्रायन्तिकैरण्डयवात् सुसिद्धात्।
प्रस्थो रसाच्छागरसार्द्धयुक्तः साध्यः पुनः प्रस्थसमः स यावत्॥
प्रियङ्गु-कृष्णा-घनकल्कयुक्तः सतैल-सपिर्म्मधु-सैन्धवश्च।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्ब्बलञ्चोपदधाति सद्यः॥ ४ ॥
एरण्डमूलात्त्रिपलं पलाशात्तथा पलांशं लघुपञ्चमूलात्।
रास्ना-बला-छिन्नरुहाश्वगन्धा-पुनर्नवारग्वध-देवदारु॥
फलानि चाष्टौ सलिलाढकाभ्यां विपाचयेदष्टमशेषितेऽस्मिन्।
वचा-शताह्वा-हवुषा-प्रियङ्गु-यष्टीकणा-वत्सक-बीज-मुस्तम्॥
दद्यात् सुपिष्टं सहतार्क्षशैलमक्षप्रमाणं लवणांशयुक्तम्।
समाक्षिकस्तैलयुतः समूत्रो बस्तिर्जयेल्लेखनदीपनोऽसौ।
जङ्घोरुपार्श्वत्रिक-पृष्ठ-कोष्ठ-हृद्गुह्यशूलं गुरुतां विबन्धम्॥
गुल्माश्म-ब्रन्ध-ग्रहणी-गुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान्॥ ५ ॥
यष्ट्याह्व-रोध्राभय-चन्दनैश्च शृतम्पयोऽग्र्यं कमलोत्पलैश्च।

---

द्विपञ्चमूलस्येति। दशमूलस्य छागमांससहितस्य रसः क्वाथोऽम्लेन काञ्जिकादिना युक्तः पूर्व्वैर्यमान्यादिभिर्भद्रैः सहितस्तथा त्रिभिः स्नेहैः सर्पिर्मज्जावसाख्यैरन्वितः श्रेष्ठो निरूहः सर्व्वव्याधिहरो गदितः। बलेति। बलापटोल्यादे रसात् सुसिद्धाद्बलादि-निरूहमाह। बलादेः सुसिद्धाद्यो रसः पृथग् जातस्तस्मात् प्रस्थश्छागमांसरसार्द्धप्रस्थेन युक्तः पाकेन प्रस्थावशेषः कार्य्यः। तथा छागमांसरसार्द्धप्रस्थेन युक्तः पुनः साध्यः। यावदसौ प्रस्थप्रमाणः स्यात्। प्रियङ्ग्वादिभिः कल्कैर्युक्तस्तैलादिसहितो बस्तिर्दीपनो मांसबलप्रदश्च स्यात्। चक्षुर्बलञ्च शीघ्रमेवोपदधाति॥ ३—४ ॥

एरण्डमूलादिति। एरण्डमूलस्य त्रीणि पलानि पलाशात् किंशुकाच्च पलानि त्रीणि ह्रस्वं पञ्चमूलं पालिकं रास्नादि प्रत्येकं पलिकान्यष्टौ मदनफलानि च जलाढकद्वये विपाचयेत्। अष्टांशशेषिते चास्मिन् वचादिकमक्षप्रमाणं सुपिष्टं दद्यात्। लवण-कर्षचतुर्थांशयुक्तं माक्षिकतैलमूत्रान्वितो यः स लेखनो दीपनो जङ्घोरुमूलादींस्तांस्तान् बहुविधानपि वातश्लेष्मोत्थान् रोगान् जयति। षड्पजातय इन्द्रवज्रादयश्च। यष्टीति।

सशर्कराक्षौद्रघृतं सुशीतं पित्तामयान् हन्ति सजीवनीयम् ॥६॥
रास्नां वृषं लोहितिकामनन्तां बलां कनीयस्तृण-पञ्चमूल्यौ ।
गोपाङ्गना-चन्दन-पद्मकर्द्धि-यष्ट्याह्व-रोध्राणि पलार्द्धकानि ॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धाढ़कमम्बुहीनम् ।
जीवन्ति-मेदर्द्धि-वरी-विदारीवीराद्विकाकोलि-कसेरुकाभिः ॥
सितोपला-जीवक-पद्मरेणु-प्रपौण्डरीकोत्पल-पुण्डरीकैः ।
लोहात्मगुप्तामधुयष्टिकाभिर्नागाह्व-मुञ्जातक-चन्दनैश्च ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन् क्षीरेण वाऽद्यात् परिषिक्तगात्रः ॥
दाहातिसार-प्रदरास्रपित्त-हृत्पाण्डुरोगान् विषमज्वरञ्च ।
सगुल्म-मूत्रग्रह-कामलादीन् सर्व्वामयान् पित्तकृतान्निहन्ति ॥७॥
कोशातकारग्वध-देवदारु-मूर्व्वा-श्वदंष्ट्रा-कुटजार्क-पाठाः ।
पक्त्वा कुलत्थान् बृहतीञ्च तोये रसस्य तस्य प्रसृता दश स्युः ॥
तान् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य ससर्पिषश्च ॥
दद्यान्निरूहं कफरोगिताय मन्दाग्नये चाशनविद्विषे च ॥८॥

---

यष्ट्याह्वादिभिः शृतं पयोऽग्र्यं श्रेष्ठं स्यात् । शर्कराक्षौद्रघृतयुक्तं सुशीतलं जीवनीयसहितं पित्तामयान् हन्ति । अभयं उशीरम् ॥ ५—६ ॥

रास्नामिति । रास्नादीन्यर्द्धपलप्रमाणानि तोयेन निःक्वाथ्य तेन रसेन पयः शृतमर्द्धाढकमात्रजलहीनं जीवन्त्यादिभिः सुपिष्टैर्घृतक्षौद्रयुतैर्निरूहं सैन्धवान्वितं शीतलमेव दद्यात् । तस्मिन्निरूहे प्रत्यागते निर्गते परिषिक्तं गोधन्वमांसरसेन शालीनद्यात् । सात्म्यादिवशाद्वा क्षीरेणाद्यात् तस्मिन्निरूहे प्रत्यागते परिषिक्ताङ्गः स च दाहादीन् हन्ति । पञ्चोपजातय इन्द्रवज्रा च ॥ ७ ॥

कोशेति । कोशातकादीन् जले पक्त्वा तस्य रसक्वाथस्य दश प्रसृताः स्युः तान् सर्षपादिभिरक्षप्रमाणैर्युक्तान् क्षौद्रादीनां प्रत्येकं प्रसृतेन युक्तान् फलाह्वयं तैलं यन्मदनफलकल्केनाम्नेश्च पक्वं तैलं तदेतत्संयोज्य कफरोगार्त्तादिभ्यो निरूहं दद्यात् । अत्र कोशातक्यादीनां द्रव्याणां परिमाणमनुक्तमपि सामान्यपरिभाषया तत्परिमाणं कल्पनीयम् । यत्परिमाणेभ्यो द्रव्येभ्यः षोडशगुणं जलं दत्त्वा चतुर्भागावशेषं यथा दश प्रसृताः सम्पद्यन्ते तत्परिमाणानि कोशातक्यादीन्यत्र परिकल्पनीयानीति बोध्यम् ॥८॥

वक्ष्ये मृदून् स्नेहकृतो निरूहान्
सुखोचितानां प्रसृतैः पृथक् सुत्रः ॥

अथमान् सुकुमाराणां निरूहान् स्नेहनान्मृदून्।
कर्म्मणा विप्लुतानान्तु वक्ष्यामि प्रसृतैः पृथक् ॥ ९ ॥
क्षीराद् द्वौ प्रसृतौ कार्य्यौ मधुतैलघृतात्त्रयः।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ १० ॥
एकैकः प्रसृतस्तैल-प्रसन्ना-क्षौद्र-सर्पिषाम्।
बिल्वादिमूलक्काथाद् द्वौ कौलत्थाद् द्वौ स वातजित् ॥ ११ ॥
पटोल-निम्ब-भूतीक-रास्ना-सप्ताच्छदाम्भसः।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥
सपञ्चतिक्तोऽभिष्यन्द-क्रिमि-कुष्ठ-प्रमेहहा ॥ १२ ॥
चत्वारस्तैल-गोमूत्र-दधिमण्डाम्लकाञ्जिकात्।
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥ १३ ॥
पयस्येक्षु-स्थिरा-रास्ना-विदारी-क्षौद्र-सर्पिषाम्।
एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ॥ १४ ॥

---

वक्ष्यइति। तुशब्दो भिन्नक्रमः। सुखोचितानां पुनः सुकुमाराणान्तु निरूहान् पृथक् प्रसृतीर्वोच्य भणिष्यामि। किम्भूतान्? मृदूनतीक्ष्णांस्तथा स्नेहकृतः कृतस्नेहान्। केचित्त्वसमग्रं वृत्तं चोक्तमनुष्टभासंगृह्णते। तच्चासम्यक्। एवं हि वृत्तस्य षण्ढता न स्यात्; तस्मादयमेव पाठः श्रेयान्। प्रसृतैश्च निष्पादितत्वादेते बस्तयः प्रसृतैरुपलक्षिताः कार्य्याः। अथानन्तरमिमान्निरूहान् स्नेहनसमर्थान् मृदूनतीक्ष्णान् सुकुमाराणां नराणां कर्म्मणा वमनादिना विप्लुतानां भ्रष्टानां प्रसृतैः पृथगुपलक्षितान् वक्ष्यामि ॥ ९ ॥

क्षीरादिति। क्षीराद्द्वौ प्रसृतौ चत्वारि पलानि मधुतैलघृतात् त्रयः प्रसृताः षट् पलानि खजेन दर्व्याकारेण मथितो बस्तिर्वातं निहन्ति बलं वर्णञ्च करोति। एकैक इति। तैलादीनां प्रत्येकं प्रसृत एको बिल्वादिपञ्चमूलक्काथाद् द्वौ प्रसृतौ कौलत्थात् क्काथात् द्वौ प्रसृतौ स बस्तिर्वातजित्। पटोलेति। पटोलादीनां पञ्चानां क्काथात् पृथक्प्रसृतो घृताच्च प्रसृतो बस्तिः ससर्षपकल्कः सपञ्चतिक्त अभिष्यन्दादिहा। चत्वार इति। तैलादिभ्यश्चतुर्भ्यश्चत्वारः प्रसृता अष्टौ पलानि पिष्टैः सर्षपैः सह बस्तिर्विट्-सङ्गादिजित्। पयस्येति। पयस्यादिक्काथानां पञ्चानां प्रसृताः पञ्च माक्षिकघृतयोर्द्वौ प्रसृतौ द्वाविति सप्तप्रसृताः। पिप्पलीकल्कवान् बस्तिः षत्वकृच्छुक्रकरः ॥ १०—१४ ॥

सिद्धबस्तीनतो वक्ष्ये सर्वदा यान् प्रयोजयेत् ।
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ॥ १५ ॥
मधुतैले समे कर्षः सैन्धवाद्द्विपिचुर्मिसिः ।
एरण्डमूलक्वाथेन निरूहो मधुतैलिकः ॥
रसायनं प्रमेहार्शःक्रिमिगुल्मान्त्रवृद्धिनुत् ॥ १६ ॥
सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ॥ १७ ॥
यापनो घनकल्केन मधुतैलरसाज्यवान् ।
पायु-जङ्घोरु-वृषण-बस्ति-मेहन-शूलजित् ॥ १८ ॥
प्रसृतांशैर्घृत-क्षौद्र-वसा-तैलैः प्रकल्पयेत् ।
यापनं सैन्धवार्द्धाक्ष-हवुषार्द्धपलान्वितान् ॥ १९ ॥
एरण्डमूलनिःक्वाथो मधुतैलः ससैन्धवः ।
एष युक्तरथो बस्तिः सवचापिप्पलीफलः ॥ २० ॥
स क्वाथो मधु-षड्ग्रन्था-शताह्वा-हिङ्गु-सैन्धवः ।
सुरदारु-वचा-रास्ना-बस्तिर्दोषहरः परः ॥ २१ ॥

---

सिद्धेति । अतः प्रसृतेभ्यो निरूहेभ्योऽनन्तरं निर्व्यापत्त्वादिगुणतः संज्ञया सिद्धबस्तीनतिप्रसिद्धान् वक्ष्ये भणिष्यामि, यान्सर्वदा प्रयोजयेत्, तथा निर्व्यापदो बहुफलान् बलादिप्रदांश्च, सुखांश्च । सुश्रुते चोक्तम्,— यस्मिन् युक्ते यथा बस्तौ ध्रुवा सिद्धिः प्रकीर्तिता । सिद्धबस्तिरिति ख्यातो मुनिभिस्तत्त्वदर्शिभिः ।” मधुतैले सम इति । मधुतैले समे तुल्ये सैन्धवस्य कर्षः मिसिः द्विपिचुद्विकर्षप्रमाण एरण्डमूलक्वाथेन सह मधुतैलिकोऽयं निरूहो रसायनं स्यात् प्रमेहादिजित् । यस्मान्मधु च तैलं च प्राधान्येनात्र वर्त्तते । मधुतैलिक इत्येष विज्ञेयो बस्तिचिन्तकैरिति सुश्रुतः ॥ १५—१६ ॥

सयष्टीति । मधुयष्टियुक्तश्चैष बस्तिश्चक्षुष्यो रक्तपित्तजित् । यापन इति । यापनाख्यो बस्तिर्मुस्तकल्केन सह मधुतैलमांसरसाज्ययुतः पाय्वादिशूलजित् । यापनः प्राणधारणात् । प्रसृतांशैरिति । यापनं निरूहं घृतादिभिः प्रसृतप्रमाणैः सैन्धवार्द्धकर्षेण हवुषार्द्धपलयुतं कल्पयेत् । एरण्डमूलेति । एरण्डमूलनिःक्वाथो मधुतैलसैन्धवान्वित इत्येष वचापिप्पलीमदनफलान्वितो युक्तरथोऽन्वर्थनामा बस्तिः । सुश्रुते चोक्तम्,—रथेष्वपि हि युक्तेषु हस्त्यश्वेष्वपि योजयेत् । तस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः” इति ॥ १७—२० ॥

स क्वाथ इति । स पूर्वोक्त एरण्डमूलक्वाथो मध्वादिभिः सह एष बस्तिर्दोषहृच्छिवश्च । पञ्चमूलस्येति । पञ्चमूलक्वाथस्तिलतैलादिकः सैन्धवमधुकसहितः सिद्धबस्तिसंज्ञो मुनिभिः

पञ्चमूलस्य निःक्वाथस्तैलं मागधिका मधु।
ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ॥ २२ ॥
द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत्।
गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च।
युक्तो बस्तिः कफव्याधिपाण्डुरोगविसूचिषु ॥
शुक्रानिलविबन्धेषु बस्त्याटोपे च पूजितः ॥ २३ ॥
मुस्ता-पाठामृतैरण्ड-बला-रास्ना-पुनर्नवाः।
मञ्जिष्ठारग्वधोशीर-त्रायमाणाक्ष-रोहिणीः ॥
कनीयः पञ्चमूलञ्च पालिकं मदनाष्टकम्।
जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत्।
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥
पिष्टैर्यष्टि-मिसि-श्यामा-कलिङ्गक-रसाजनैः।
बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्द्धनः ॥
वातासृङ्मोहमेहार्शो गुल्मविण्मूत्रसंग्रहम्।
विषमज्वर-वीसर्प-वध्नाध्मान-प्रवाहिकाः।
वङ्क्षणोरु-कटी-कुक्षि-मन्या-श्रोत्र-शिरोरुजः ॥
हन्यादसृग्दरोन्माद-शोफ-कासाश्मकुण्डलान्।
चक्षुष्यः पुत्रदो राज्ञां यापनानां रसायनम् ॥ २४ ॥

---

स्मृतः। द्विपञ्चेति। द्विपञ्चमूलादीनि गोमूत्रेण पाचयेत्, तेन क्वथितगोमूत्रेण पिष्टैश्च पाठादिभिर्युक्तः कफामयादिहृत् ॥ २१—२३ ॥

मुस्तेति। मुस्तादीनि कनीयःपञ्चमूलपर्यन्तानि पृथक् पलिकानि मदनफलान्यष्टौ जलाढके पचेत्। पादशेषं परिस्रुतं क्षीरशेषं पुनः पचेदिति। तावत्कषायेण सह पक्तव्यं यावत् क्षीरप्रस्थद्वयं स्यादित्यर्थः। बस्तिः सर्पिर्मधुसैन्धवयुतः पिष्टैर्यष्ट्यादिभिः सहितः सुखोष्णो मांसादिवर्द्धनो वातरक्तादीन् हन्यात्। चक्षुष्यादिगुणश्च। किम्भूतः? सपादजाङ्गलरसः, तत्र चतुर्विंशतिपलिको निरूहस्तस्य पादेन षट्पलानि जाङ्गलरसस्य स्युरित्यर्थः ॥ २४ ॥

मृगाणां लघुबभ्रूणां दशमूलस्य चाम्भसा ।
हवुषा-मिसि-गाङ्गेयी-कल्कैर्वातहर: परम् ॥
निरूहोऽत्यर्थवृष्यश्च महास्नेहसमन्वित: ॥ २५ ॥
मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।
लघुना पञ्चमूलेन पालिकेन समन्वितम् ।
पक्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ।
तद्विदारी-कणा-यष्टी-शताह्वाफलकल्कवत् ।
बस्तिरीषत्पटुयुत: परमं बलशुक्रकृत् ॥ २६ ॥
कल्पनेयं पृथक् कार्या तित्तिरिप्रभृतिष्वपि ।
विष्किरेषु समस्तेषु प्रतुद-प्रसहेषु च ॥
जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ॥ २७ ॥
गोधा-नकुल-मार्जार-शल्यकोन्दुरजं पलम् ।
पृथक् दशपलं क्षीरे पञ्चमूलञ्च साधयेत् ॥
तत्पय: फलवैदेहीकल्कद्विलवणान्वितम् ।
ससितातैलमध्वाज्यो बस्तिर्योज्यो रसायनम् ॥
व्यायाम-मथितोरस्क-क्षीणेन्द्रिय-बलौजसाम् ।
विबद्ध-शुक्र-विण्मूत्र-खुड-वात-विकारिणाम् ॥
गज-वाजि-रथ-क्षोभ-भग्नजर्जरितात्मनाम ।

---

मृगाणामिति । ह्रस्वानां बृहतामुभयरूपाणां मृगाणां मांसानां तथा दशमूलस्य च क्वाथेन सह हवुषादिकल्को बस्ति: सुष्ठु वातहरो महास्नेहयुतो वृष्यश्च स्यात् । मयूरमिति । मयूरं पक्षादिवर्जितं दशपलमात्रं ह्रस्वेन पञ्चमूलेन पलमितेन युतं क्षीरं जले पक्वा क्षीरस्य द्वयाढिको जलस्य द्वयाढिक इत्येवं कृत्वा तावत् क्वाथयेत्, यावत् क्षीरावशेषं स्यात् । क्षीरञ्च तच्छेषञ्च क्षीरशेषम् । घृतमाक्षिकसहितं विदार्यादिकल्कान्वितमीषल्लवणयुक्तं बस्ति: परमशुक्रकृत् ॥ २५—२६ ॥

कल्पनेति । इयञ्च कल्पना तित्तिर्यादिष्वपि विष्किरेष्वशेषेषु प्रतुदेषु प्रसहेषु च पृथक्कार्या तथैव जलचरेष्वपीयं कल्पना कार्य्या । मत्स्येषु तु क्षीरवर्जिता कल्पनेयं कार्य्या, मत्स्यानां क्षीरेण सह विरुद्धत्वात् । गोधेति । गोधादीनां मांसं पृथक् प्रत्येकं दशपलं क्षीरे पञ्चमलं साधयेत् । एतत् क्षीरं मदनफलकणाकल्कसैन्धवसौवर्चलान्वितं

पुनर्नवत्वं कुरुते वाजीकरणसत्तमः ॥ २८ ॥
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ २९ ॥
स्नेहांश्चायन्त्रणान् सिद्धान्सिद्धद्रव्यैः प्रकल्पयेत् ॥ ३० ॥
दोषघ्नाः सपरिहारा वक्ष्यन्ते स्नेहबस्तयः।
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम्॥
गुडूच्येरण्ड-भूतीक-भार्गी-वृषक-रोहिषम् ।
शतावरीं सहचरं काकनासां पलांशकम् ॥
यव-माषातसी-कोल-कुलत्थान् प्रसृतोन्मितान् ।
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ।
अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ ३१ ॥
अनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ३२ ॥
शताह्वा-चिरिबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥ ३३ ॥
सैन्धवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ॥ ३४ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥

---

बस्तिः शर्करातैलमधुघृतसहितौ योज्यौ रसायनं स्यात्। व्यायाममथितोरस्कादीनां पुनर्नवं कुरुते वाजीकरणेषु मुख्यश्च ॥ २७—२८ ॥

सिद्धेनेति। आत्मगुप्तादिभिः सिद्धेन पयसा सह भोज्यम्। उच्चटा गुञ्जा। स्नेहानिति। स्नेहांश्च स्नेहबस्तीनयन्त्रणान्निःपरिहारान् सिद्धान् बहुशो दृष्टप्रत्ययान् सिद्धद्रव्यैर्निरपायैः प्रकल्पयेत्। दोषघ्ना इति। अधुना दोषघ्नाः सपरीहाराः स्नेहबस्तयो वक्ष्यन्ते।—तानेवाह, दशमूलादिकं पलप्रमाणं काकनासा काकजङ्घा यवादीनि प्रसृतप्रमाणानि जलस्य वहे द्रोणचतुष्टये विपाच्य तेन द्रोणशेषेण च तैलाढकं पलांशकैः जीवनीयैः पेष्यैः सह पचेत्। तदनुवासनमपि पवनविकारजित् ॥ २९—३१ ॥

अनूपानामिति। अनूपप्राणिनां वसा जीवनीयद्रव्यसाधिता तद्वत् पूर्वगुणा। शताह्वेति। शताह्वादिभिस्तैलं पक्वं पवने योज्यम्। सैन्धवेनेति। अग्निवर्णेन सैन्धवेन तप्तश्च घृतं समीरणजित्। जीवन्तीमिति। जीवन्त्यादीन् कल्कीकृत्य तैलघृतं यमकं क्षीरे चतुर्गुणे साधयेत्। एतदनुवासनं बृंहणं वातपित्तघ्नं बलादिवर्द्धनं रजःशुक्ररोगहरं

स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम।
पिष्ट्वा तैलघृतं क्षीरे साधयेत्तच्चतुर्गुणे॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम्।
रजःशुक्रामयहरं पुत्रीयमनुवासनम्॥ ३५॥
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा।
ह्रीवेरं मधुकं भार्गी देवदारु सकट्फलम्॥
नागरं पुष्करं मेदा * चविका चित्रकः शठी।
विडङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा॥
बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः।
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत्॥
ब्रध्नोदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम्॥ ३६॥
साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा।
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः॥
फलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं कफे॥ ३७॥
मृदुबस्तिजड़ीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते।
तीक्ष्णैर्विकर्षितः स्निग्धो मधुरः शिशिरो मृदुः॥ ३८॥

---

* मूर्व्वेति वा पाठः।

---

पुत्रीयञ्च। पुत्रीयमिति हितार्थे पुत्राच्छचेति छः। सैन्धवमिति। सैन्धवादिभिः समांशैः सामान्यपरिभाषया एरण्डतैलं तिलतैलं वा साध्यम्; द्विग्रहणादेरण्डतैलस्यार्द्धं तिलतैलस्यार्द्धमित्यपि कल्पनीयमित्याहुः। एतदनुवासनं कफरोगजिच्छीघ्रं ब्रध्नादीन् हन्यात्॥ ३२—३६॥

साधितमिति। पञ्चमूलेन बिल्वादिना वा साधितं तैलं कफघ्नं तैलं कल्पयेत्। अथवा कफघ्नैर्द्रव्यैः फलैश्चाष्टगुणैरम्लैः सिद्धमनुवासनं कफे शस्तम्। मृदुबस्तीति। मृदुश्चासौ बस्तिश्च मृदुबस्तिर्मधुरस्निग्धशीतलात्मकत्वान्मृदुर्मृदुबस्तिश्चासौ जड़ीभूतश्च मृदुबस्तिजड़ीभूतः कोष्ठाद्बहिर्निःसरणात् कोष्ठ एवावस्थितिं कृत्वा स्थितस्तस्मिंस्तथाभूतेऽन्यो बस्तिस्तीक्ष्णः शस्यते। तीक्ष्णैर्मवादिनिष्पादितैर्बस्तिभिर्विकर्षिते कोष्ठे सति स्निग्धादिगुणो बस्तिरिष्यते॥ ३७—३८॥

तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः।
प्राप्तकालं विधातव्यं क्षीरघृतैस्तु मार्द्दवम् ॥ ३९ ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्त्तयति ॥ ४० ॥
उष्णार्तानां शीतांश्छीतार्त्तानां तथा सुखोष्णांश्च।
तद्योग्यौषधयुक्तान् बस्तीन् सन्तर्क्य युञ्जीत ॥ ४१ ॥
बस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ॥४२॥
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ॥
दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥ ४३ ॥

इति कल्पस्थाने दोषहरणसाकल्यं बस्तिकल्पो
नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

तीक्ष्णत्वमिति। तीक्ष्णत्वं बस्तेर्मूत्रपील्वग्निलवणक्षारसर्षपैः प्राप्तकालं योग्यावसरे विधातव्यं क्षीरघृताद्यैश्च बस्तेर्मार्दवं प्राप्तकालं कर्त्तव्यम्। बलेति। बलादीन् प्रविभज्य स्वैः स्वैरौषधवर्गैर्यथायथं योग्यैः सिद्धो बस्तिर्योजितः स्वान् स्वानामयानुपशमयति। उष्णार्त्तानामिति स्पष्टम्। मेदस्विन इति। यस्मादेते दोषैर्निबद्धजीवितास्तस्मादेतेषां दोषनिर्हरणात् प्राणसंशयः स्यादित्याह जीवितरक्षार्थमेते न विशोध्या इति। आर्य्यास्ततः ॥ ३९—४३ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदय-टीकायां
सर्व्वाङ्गसुन्दराख्यायां कल्पस्थाने बस्तिकल्पश्चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ।

——:०:——

अथातो बस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्प-स्नेह-लवण-द्रव्य-मात्रो घनोऽपि वा ॥
बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं तेन स्याद्वात-मूत्र-शकृद्ग्रहः ॥
नाभि-बस्ति-रुजादाहो हृल्लेपः श्वयथुर्गुदे ।
कण्डूगण्डानि ववर्ण्यमरतिर्वह्निमार्दवम् ॥ २ ॥
क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।
उष्णस्य तस्माद्ध्येकस्य तत्र पानं प्रशस्यते ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
बिल्वमूल-त्रिवृद्दारु-यव-कोल-कुलत्थवान् ॥
सुरादिमांस्तत्र बस्तिः सप्राक्पेष्यस्तमानयेत् ॥ ३ ॥

---

अस्मादनन्तरं बस्तिव्यापत्सिद्धिर्व्याख्यायते । अथात इति पूर्ववत् । असम्यक् प्रयुक्तेषु बस्तिषु या व्यापदस्तासां साधनायास्याध्यायस्यारम्भः । अस्निग्धेति । अस्निग्धादि-गुणस्य पुंसः शिशिरस्तथाल्पस्नेहलवणोऽल्पद्रव्यमात्रोऽल्पद्रव्यकल्पस्तथा घनो बहुद्रव्यकल्पो बस्तिर्योजितः सन् बस्तिसाध्यं दोषं संक्षोभ्य दुर्बलत्वादनिर्हरन्नयोगं करोति ; तेनायोगेन वातादिग्रहः स्यात् ॥ १—२ ॥

क्वाथद्वयमिति । प्रागतीसारचिकित्सिते क्वाथद्वयं पाचने युगलं द्वयं दोषेऽतिसारिणि विहितं भूतीकपिप्पल्यादिरेको बिल्वधनिको द्वितीयस्तस्मात् क्वाथद्वयादेकस्यान्यतमस्य क्वाथस्योष्णस्य तत्रावस्थायां पानं प्रशस्यते । तथा फलवर्तयः स्वेदाश्च नानाविधा अवस्थाश्च ज्ञात्वा विरेचनं शस्यते । बिल्वादिमान् बस्तिस्तथा सुरादिमान् बस्तिः स प्राक् पेष्यः । बलां गुडूचीमित्यादौ बस्तौ यः पेष्यः यवान्यादिः तेन प्राक्पेष्येण सह वर्त्तते सप्राक्-पेष्यस्तमत्र दत्तबस्तिनोत्क्लिष्टं दोषमानयेदाकर्षयेत् ॥ ३ ॥

युक्तोऽल्पवीर्य्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा ।
बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम् ॥
स विमार्गोऽनिलः कुर्य्यादाध्मानं मर्म्मपीड़नम् ।
विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनाम् ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ४ ॥
स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्त्तिं प्रयोजयेत् ।
बिल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान् ॥
सरलामरदारुभ्यां साधितं वाऽनुवासनम् ॥ ५ ॥
कुर्व्वतो वेगसंरोधं पीड़ितो वाऽतिमात्रया ।
अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः ॥
मृदुर्वा मारुतेनोर्द्ध्वं विक्षिप्तो मुखनासिकात् ।
निरेति मूर्च्छाहृल्लासतृड्दाहादीन् प्रवर्त्तयन् ॥ ६ ॥
मूर्च्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ।
व्यजेदाक्लमनाशाच्च प्राणायामञ्च कारयेत् ॥

---

युक्तइति । दोषाढ्य तथा रूक्षे क्रूरकोष्ठे वा बस्तिरल्पवीर्यो दत्तो दोषैर्व्वाय्वाद्यैरावरकैरावृतोऽनन्तरं स बस्ती रुद्धमार्गः प्रतिहतगतिप्रसरणो वायुं रुन्ध्यात् । सोऽनिलो विमार्गग आध्मानं कुर्यात् । तथा हृदयादीनां मर्म्मणां व्यधनं पीडनं तथा गुदकोष्ठस्य विदाहं तथा मुष्कवंक्षणवेदनाञ्च कुर्यात् । तथा शूलैर्नानाविधाभिर्भग्नरुद्धमृदितपीडितावनद्धादिभिः पीडाभिर्हृदयं रुणद्धि आवृणोति । हृदयमावृत्यानन्तरमितश्च तश्चानीयते देशे धावति पवनः ॥ ४ ॥

स्वभ्यक्तेति । तत्रावस्थाविशेषे सुष्ठ्वभ्यक्ताङ्गस्य स्विन्नाङ्गस्य फलवर्त्तिं प्रयोजयेत् । बिल्वादिकश्च निरूहः स्यात् पीलुसर्षपमूत्रवान् । सरलदेवदारुभ्यां साधितं तैलं वाऽनुवासनं स्यात् ॥ ५ ॥

कुर्व्वत इति । वेगसंरोधं वेगविधारणं कुर्वतः पुंसो यः पीडितो बस्तिरतिमात्रया वा पीडितः अस्निग्धलवणोष्णो वा तथाल्पो मात्रयाल्पभेषजश्च मृदुर्वा स तथाभूतो मारुतेनोर्द्ध्वं क्षिप्तो मुखनासिकान्ते निरेति निर्गच्छति मूर्च्छादीन् प्रवर्त्तयेत् ॥ ६ ॥

मूर्च्छेति । अस्य तु तथाविधो बस्तिः पुरुषस्य मूर्च्छादिविकारं दृष्ट्वा शीताम्बुना मुखं सिञ्चेत्तथा क्लमनाशं यावत्तं तालवृन्तादिना वीजयेत् । तथा तं पुरुषं प्राणायामञ्च

पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम् ।
केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः
शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥
पाणिवस्त्रैर्गलापीडं कुर्य्यान्न म्रियते यथा ।
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥
अपानः पवनो बस्तिं तमाश्वेवापकर्षति ।
कुष्ठक्रमुककल्कञ्च पाययेताम्लसंयुतम् ॥
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत् ।
गोमूत्रेण त्रिवृत्पथ्याकल्कश्चाधोऽनुलोमनम् ॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यव-कोल-कुलत्थैश्च विधेयो मूत्रसाधितैः ॥
वस्तिर्गोमूत्रसिद्धैर्वा साम्रतावंशपल्लवैः ।
पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः ॥
सतैलगुडसिन्धूत्थविरेकौषधकल्कवान् ।
बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते ॥
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥ ७ ॥
बस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ।
अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ॥

---

कारयेत् । प्राणायामेन ह्यूर्द्ध्वं विक्षिप्तो वस्तिरधो याति । उष्णैः करैः पृष्ठं पार्श्वमुदरञ्च मृद्यात् तथा तं पुरुषमधोमुखं कृत्वा केशैरुत्क्षिप्योर्द्ध्वं नीत्वा वपुर्धुन्वीत; तथा व्यालादिभिर्भीषयेत् । तयोर्द्ध्वं प्रवृत्तो वस्तिर्यस्मादधो गच्छति तथा पाणिभिर्वस्त्रैर्गलापीडं कुर्याद्यथा नाम्रियेत । एवं सति प्राणोदाननिरोधः सम्पद्यते । प्राणोदाननिरोधेश्चस्मादधोगः सुप्रसिद्धतरायनो भूत्वाऽपानो वायुस्तं वस्तिं द्रागेवापकर्षत्यूर्द्ध्वादधः क्षिपतीति सुष्ठु प्रकर्षेण शुद्धतरमयनं यस्य स शुद्धतरायनः कुष्ठादिकल्कं वाऽम्लसंयुतं पाययेत् । कल्कोऽस्यातुरस्यौष्ण्यादिगुणयोगात्तं वस्तिमनुलोमयेत् । त्रिवृतादिकल्कं पीतं गोमूत्रेणाधोऽनुलोमनं पक्वाशयस्थिते दोषे स्निग्धैर्निरूहैर्दशमूलिको विधातव्यः । यवादिभिश्च गोमूत्रक्वथितैर्वस्तिर्विधेयः । अथवा गोमूत्रसिद्धैर्गुडूच्यादिभिस्तैलगुडसैन्धवयुक्तो बस्तिर्विरेकद्रव्यकल्कवान् विधेयः ॥ ७ ॥

बस्तिरिति । अत्युष्णतीक्ष्णाम्लघनो बस्तिः प्रयुक्तोऽतिस्वेदितस्य वा पुंसोऽल्पे दोषे तथा मृदौ कोष्ठे मुहुर्मुहुःप्रयुक्तत्वादतियोगत्वं प्राप्तोयं कुक्षिरुग्जनकः स्यात् ।

अतियोगत्वमापन्नो भवेत् कुक्षिरुजाकरः।
विरेचनातियोगेन स तुल्याकृतिसाधनः॥ ८॥
बस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा।
गुदं दहन् लिखन् क्षिण्वन् करोत्यस्य परिस्रवम्॥
सविदग्धं स्रवत्यस्रं वर्णैः पित्तञ्च भूरिभिः॥
बहुशश्चातिवेगेन मोहं गच्छति सोऽसकृत्।
रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते॥
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत्।
तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकान् जयेत्॥
विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम्।
युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम्॥
माषयूषेण कुल्माषान् पानं दध्यथवा सुराम्॥ ९॥
सिद्धिर्बस्त्यापदामेवं स्नेहबस्तेस्तु वक्ष्यते॥ १०॥
शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः।
अतिभुक्ते गुरुर्वर्चःसञ्चयेऽल्पबलस्तथा॥

---

स तथाविधो बस्तिर्विरेचनातियोगेन तुल्ये सदृशे लक्षणचिकित्सिते यस्य स एवं स्यात्। बस्तिरिति। क्षाराम्लतीक्ष्णोष्णलवणो बस्तिः प्रयुक्तः पैत्तिकस्य वा प्रयुक्तो गुदं दहन्निव विलिखन्निव क्षिपन्निवास्य नरस्य परिस्रवं करोति स पुरुषस्तदा विदग्धमस्रं स्रवति तथा बहुशो बहून् वारानतिवेगेन भूरिभिर्बहुभिर्वर्णैः पित्तं स्रवति तथा मोहमसकृद् गच्छति तदावस्थायां रक्तपित्तघ्नी तथा रक्तातिसारघ्नी क्रिया च प्रशस्यते दाहमोहादिषु त्रिवृत्-कल्कं द्राक्षाजलेन पिबेत्। अतिविरिक्तस्य क्षीणपुरुषस्य पुंसः कुल्माषान् माषयूषेण सह भोजनमथवा युञ्ज्यात् पानं दध्यथवा सुरां दद्यात्॥ ८—९॥

सिद्धिरिति। बस्त्यापदां निरूहव्यापत्तीनामेवं सिद्धिश्चिकित्सितं स्यात्। स्नेहबस्ते-रनुवासनस्य सिद्धिर्वक्ष्यते। शीत इति। शीतो बस्तिरल्पोवाऽधिके वाते दत्तस्तथा पित्तेऽत्युष्णस्तथा कफे मृदुरयोगः संपद्यते। अतिभुक्ते गुरुर्बस्तिर्दत्तस्तथा वर्चसः पुरीषस्य सञ्चयेऽल्पबल उभयथा मात्रया वीर्यतो दत्तो बस्तिः शीतादिकारणाद्वातादिभिः स्नेह-बस्तिरावृतो नायाति गुदमार्गान्न प्रत्यागच्छति। अभिभवादस्यतोऽव सम्भोरुसादादिभि-र्वायुना स्नेहमावृतं विद्यात्। तमेवंविधं स्नेहं स्नेहबस्तिं निरूहैः सम्यक् स्निग्धाम्लव-णोष्णैर्निर्हरेत्। तानेव निरूहानाह। सौवीरकसुरादिसाधितैस्तथा गोमूत्रान्वितैस्तथा

दत्तस्तैरावृतस्नेहो नायात्यभिभवादपि ।
स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्द्दनैः ॥
पार्श्वरुग्वेष्टनैर्विद्यात्तद्वायुना स्नेहमावृतम् ।
स्निग्धाम्ललवणोष्णैस्तं रास्ना-पीतद्रु-तैलिकैः ॥
सौवीरक-सुरा-कोल-कुलत्थ-यव-साधितैः ।
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पञ्चमूलकैः ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥ ११ ॥
तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ॥ १२ ॥
तन्द्रा-शीतज्वरालस्य-प्रसेकारुचिगौरवैः ।
संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥
कषाय-तिक्त-कटुकैः सुरामूत्रोपसाधितैः ।
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ॥ १३ ॥
छर्दिमूर्च्छारुचिग्लानि-शूलनिद्राङ्गमर्द्दनैः ।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ।
कटूनां लवणानाञ्च क्वाथैश्चूर्णैश्च पाचनम् ॥
मृदुर्विरेकः सर्व्वञ्च तत्रामविहितं हितम् ॥ १४ ॥

---

पञ्चमूलनिर्वृतैः पञ्चमूलक्वाथवद्भिरित्यर्थः । रास्ना च पीतद्रुश्च रास्नापीतद्रू ताभ्यां साधिते तैले रास्नापीतद्रुतैले ते विद्येते येषां निरूहाणां तैः क्वचित्पुटके रास्नातैलं क्वचिद्धरिद्रातैलं योज्यमित्यर्थः । ताभ्यामिति द्विवचननिर्देशात् पृथक्तैलद्वयमुपयोगीति गम्यते । च समुच्चये । न केवलं तं निरूहयेत् । रास्नातैलेन पीतद्रुतैलेन वा दोषाद्यनुरोधादनुवासयेच्च सायंभुक्ते न तु प्रातर्भुक्ते ॥ १०—११ ॥

तृडिति । तृड्दाहादिभिः पित्तावृतं स्नेहबस्तिं विद्यात् । तं स्वादुतिक्तैर्बस्तिभिर्विनिर्हरेत् । तन्द्रेति । तन्द्रादिभिः कफावृतं स्नेहबस्तिं विद्यात् । तं कषायकटुतिक्तकैः सुरामूत्रोपसाधितैः फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् । फलानामुष्णवीर्याणामक्षोटादीनां तैलं ; केचित्तु फलं मदनफलं तिलतैलञ्च ताभ्यां युतास्तैरिति व्याचक्षते । छर्द्दीति । छर्द्यादिभिरामलिङ्गैर्दाहयुतैः स्नेहमत्यशनावृतं विद्यात् । कटूनां लवणानाञ्च क्वाथैश्चूर्णैश्च पाचनं हितं तथा मृदुभिरतीक्ष्णैर्विरेकस्तथा तस्मिन्नामविहितं सर्वमौषधं हितम् ॥ १२—१४ ॥

विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥
स्नेहं विड़ावृतं ज्ञात्वा स्नेहस्वेदैः सवर्त्तिभिः ।
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ॥
निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ॥ १५ ॥
अभुक्ते शूनपायौ वा पेयामात्राशितस्य च ।
गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ।
ऊर्द्ध्वं कायं ततः कण्ठादूर्द्ध्वेभ्यः खेभ्य एत्यपि ॥
मूत्रश्यामात्रिवृत्सिद्धो यव-कोल-कुलत्थवान् ।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥
कण्ठादागच्छतः स्तम्भ-कण्ठग्रह-विरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्हणम् ॥ १६ ॥
नापक्वं प्रणयेत् स्नेहं गुदं स ह्युपलिम्पति ।
ततः कुर्यात् स रुङ्मोहकण्डूशोफान् क्रियाऽत्र वा ॥
तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम् ॥ १७ ॥
अनुच्छ्वास्य तु बद्धे वा दत्ते निःशेष एव च ।
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ १८ ॥

---

विण्मूत्रेति । विण्मूत्रादिभिर्विड़ावृतं स्नेहं विदित्वा स्नेहादिभिस्तथा श्यामादिभिः सिद्धैर्निरूहैरनुवासनैश्च तथोदावर्तहरेण विधिना सम्यग् विनिर्हरेत् । अभुक्त इति । अभुक्ते स्नेहबस्तिस्तथा शून: पायुर्यस्य तस्मिन् प्रणिहितो बस्तिरथवा पेयामात्रमेवाशितः येन पेयामात्राशितस्तस्य गुदे प्रणिहितः स्नेहबस्तिरनावृतः सन् वेगादूर्द्ध्वं कायं धावति, ततः कण्ठादूर्द्ध्वेभ्यश्च खेभ्यः पतति तत्र गोमूत्रादिसिद्धो यवादिमान् क्राथस्तेन क्राथेन सिद्धतैलैर्निरूहमनुवासनं दद्यात् । कण्ठादागच्छतः स्नेहस्य स्तम्भकण्ठग्रहादिभिश्छर्दिघ्नीभिः क्रियादिभिश्च तन्निर्हरणं कुर्यात् ॥ १५—१६ ॥

नापक्वमिति । अपक्वं स्नेहं न दद्यात् यस्मात् सोऽपक्वः स्नेहो गुदमुपलिम्पति तत उपलिप्ते गुदे रुजाभिः सह मोहादीन् कुर्यात् । अत्र चिकित्सितं तीक्ष्णः बस्तिस्तथाऽर्कपत्ररसे शृतं तैलम् । अनुच्छ्वास्येति । अनुच्छ्वास्य बस्तेर्वदने बद्धे सत्यथवा निःशेषं दत्ते सति प्रविश्यान्तरे वायुः कुपितः शूलतोदकरः स्यात् । तस्मिन्नभ्यङ्गो गुदे

द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटी-गुद-जङ्घोरु-बस्ति-स्तम्भार्त्ति-भेदनम् ॥
भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सबस्तयः ॥ १९ ॥
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ।
उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ।
बस्तिः स्यात्तत्र बिल्वादिफलैः श्यामादिमूत्रवान् ॥ २० ॥
अतिप्रपीड़ितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र बस्तिर्विरेकश्च गलपीड़ादि कर्म च ॥ २१ ॥
वमनाद्यैर्विशुद्धञ्च क्षामदेहबलानलम् ॥
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥
भिषक् प्रयत्नतो रक्षेत् सर्वस्मादपवादतः ॥ २२ ॥
दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥ २३ ॥
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥ २४ ॥

---

स्वेदश्च तथा वातहन्तॄणि भोजनानि च । द्रुतमिति । शीघ्रं प्रणीते निष्कृष्टे सहसोत्क्षिप्ते च कट्यादिषु स्तम्भपीडाभेदनानि स्युस्तत्र वातघ्नमशनं स्वेदोऽभ्यङ्गश्च । पीड्यमान इति । पीड्यमाने बस्तिपुटकेऽन्तरा मध्य एव कदाचित्तस्मिन् मुक्ते गुदेऽनिलः प्रतिहतो बलवान् दुष्टः शिरोरुजमूरुसादञ्च जनयेत् । तत्र विल्वादिभिर्बस्तिभिर्मदनफल-श्यामादिमान् स्यात् ॥ १७—२० ॥

अतिप्रपीड़ित इति । अतिप्रपीड़ितो बस्तिपुटकः कोष्ठे तिष्ठति गलं वाऽऽयाति तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च शस्यते । वमनाद्यैरिति । वमनविरेकाद्यैश्च विशुद्धं क्षामदेहं क्षामबलं क्षामानलञ्च पुरुषं वैद्यः प्रयत्नेन सर्वस्मादेवापवादाद्रक्षेत् । किमिव ? यथा तरुणमभिनवं क्षतमण्डं यथा तैलपूर्णं पात्रं रक्ष्यते तथा यत्नेन रक्षेत् । दद्यादिति । स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततस्तस्मिन्मधुरहृद्यानि दद्यात् । अनन्तरमम्ललवणौ रसौ ततः स्वादुतिक्तरसौ ततः कषायकटुकौ रसौ दद्यात् ॥२१-२३॥

अन्योन्येति । अन्योन्यप्रत्यनीकानां परस्परप्रतिपक्षाणां रसानां तथा स्निग्धरूक्षयो-रन्योन्यं प्रत्यनीकयोर्व्यत्यासाद्विपर्ययादुपयोगेन यथास्वमुपयोगेन यथा मधुररसमुपयुज्य पुनरम्लाद्यन्यतमं तत्प्रतिपक्षं युञ्ज्यात् । अम्लमुपयुज्य पुनर्मधुराद्यन्यतमं तत्प्रतिपक्षं

सर्व्वंसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ २५ ॥

इति कल्पस्थाने बस्तिव्यापत्सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातो भेषजकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥
धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ ।
श्मशान-चैत्यायतन-श्वभ्र-वल्मीकवर्जिते ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते ।
अफालकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ।
जन्तुजग्धं दवादग्धमविदग्धञ्च वैकृतैः ॥

---

युञ्ज्यात्। एवं स्निग्धरूक्षयोगं कुर्यात्। तथा तं पुरुषं वमनादिभिर्विशुद्धप्रकृतिं यथोचितां स्वां नयेत्। सर्व्वंसह इति। सर्वंसहोऽशेषक्षमस्तथा स्थिरबलः प्रकृतिं प्राप्तः पुमान् वेद्यः ॥ २४—२५ ॥

इति श्रीमृगाङ्कदत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायां कल्पस्थाने बस्तिव्यापत्सिद्धिर्नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ भेषजकल्पो व्याख्यातुमारभ्यते। बस्तिव्यापदां ह्युत्पन्नानां सिद्धिः साधनं सद्भेषजप्रयोगात् अपि च सर्वेषां रोगाणां या सिद्धिः प्रशमोपायः सोऽपि सद्भेषजप्रयोगादेवेत्याह,—अथात इति। भेषजस्य कल्पो योजना भेषजकल्पः शेषं पूर्ववत्। धन्वसाधारण इति। धन्वदेशे तथा साधारणे देशे तथा समे न निम्नोन्नते तथा सन्मृत्तिके तथा श्मशानादिवर्जिते। चैत्यं दिनचर्याध्याय उक्तम्। तथा मृदौ सुस्पर्शे तथा प्रदक्षिणमनुकूलं जलं यस्मिंस्तथा कुशरोहिषसंस्तृते तथाऽफालकृष्टे न लिखिते तथा द्रुमैर्महत्तरैरनाक्रान्ते देशे यद्भेषजं जातं युक्तं यथास्ववर्णरसादिभिस्तद् भेषजं शस्यते।

भूतैश्छायातपाम्ब्वाद्यैर्यथाकालञ्च सेवितम्।
अवगाढ़महामूलमुदीचीं दिशमाश्रितम्॥ २॥
अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत्॥
सक्षीरं तदसम्पत्तावनतिक्रान्तवत्सरम्।
ऋते गुड-घृत-क्षौद्र-धान्य-कृष्णा-विडङ्गतः॥ ३॥
पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजम्।
वयोबलवतां धातुपिच्छशृङ्गखुरादिकम्॥ ४॥
कषाययोनयः पञ्च रसा लवणवर्जिताः।
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना॥
पञ्चधैव कषायाणां पूर्वं पूर्वं बलाधिकाः॥ ५॥

---

तथा जन्तुभिः कीटैरजग्धमभक्षितं दवेन दावाग्निनाऽदग्धमस्पृष्टं तथाऽविदग्धं वैकृत-भूतैः स्वभावं परित्यज्य धर्मबाधाद्विकृतैराकाशादिभिर्यदनासेवितं तदविदग्धम्। विकृतमेव वैकृतम्। प्रज्ञादित्वादण्। तथा छायादिभिर्यथाकालं कालमनतिक्रम्य सेवितं यदा तस्य भेषजस्य वृद्धौ छायादीनामन्यतमं वस्तुजातमुपयुज्यते तदा तेन सेवितमित्यर्थः। तथाऽवगाढं दूरं गतं महत् पृथु मूलं यस्य तदवगाढ़महामूलं तथो-दीचीमुत्तरां दिशमाश्रितं तामाश्रित्य स्थितम्॥ १—२॥

अथेति। अथेत्यानन्तर्ये मङ्गलसूचकः। भेषजमेवंविधं विदित्वाऽनन्तरं कल्याणं स्वस्त्ययनादि चरितमनुष्ठितं येनासौ कल्याणचरितस्तथा भेषजहरणं प्रति श्रद्धावांस्तथा शुचिः स्नानादिशुद्धस्तथोपोषितः कृतोपवासः। एवंविधमौषधमेवंविधः पुमान् गृह्णीयात्। तच्च भेषजं स्वस्थं कृत्वा स्थितं काले सक्षीरमार्द्रं कल्पयेत्। तदसम्पत्तौ तु तथाविधस्य सक्षीरस्यौषधस्यासम्पत्तावनतिक्रान्तवत्सरं भेषजं कल्पयेत्। किं सर्वं द्रव्यमनतिक्रान्त-वत्सरं कल्पयेत्? इत्यत आह,—ऋत इत्यादि। गुडादीन् वर्जयित्वा परमौषधमन-तिक्रान्तवत्सरं कल्पयेत्। पय इति। क्षीरं बष्कयिण्याः सम्बन्धि ग्राह्यम्। विण्मूत्रञ्च तत् क्षीरञ्च नीरुजमपगतदोषं ग्राह्यम्। वयोबलवतां धातुपिच्छादिकं ग्राह्यम्। आदिग्रहणाच्चिकित्सितोपयोगिकेशनखचर्मादिकं गृह्यते। वयः शब्दोपादानाद्विशिष्टं तरुणं वयो गृह्यते। नह्यवयाः कश्चिदस्ति॥ ३—४॥

कषाययोनय इति। कषायस्य योनय आकरा लवणवर्जिता मधुरादयः पञ्च रसास्तेभ्य एव कषायाः स्वरसादयः पञ्च सम्भवन्ति। लवणस्य तु स्वरसकल्पनाद्या योगा न सम्भवन्ति सदैव शुष्करूपत्वात्। कल्ककल्पनापि न सम्भवति यतो यद्द्रव्यं द्रवेण सिक्तं पिण्डीभवति न तु विलीयते तत्कल्कसंज्ञामासादयति। तथा यद्द्रव्यं क्वाथयित्वा

सद्यः समुद्धृतक्षुण्णात् यः स्रवेत् पटपीडितात् ।
स्वरसः स समुद्दिष्टः कल्कः पिष्टो द्रवाप्लुतः ।
चूर्णोऽप्लुतः शृतः क्वाथः शीतो रात्रिं द्रवे स्थितः ॥ ६ ॥
सद्योऽभिषुतपूतस्तु फाण्टस्तन्मानकल्पने ।
युञ्ज्याद्वयाध्यादिबलतस्तथा च वचनं मुनेः ॥
"मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥ ७ ॥"

जलादुद्रियते द्रव्यावयवास्तूदकं प्रविशन्ति तत्रैव शृतकल्पना । लवणस्य तु विलीनरूपत्वादेवं न सम्भवति । इति शृतकल्पनाया अप्यसम्भवः । एवं शीतफाण्टयोरप्येतेनैव न्यायेनासम्भव इत्युक्तम् । लवणवर्ज्या रसाः कषाययोनय इति । मुनिनाप्युक्तम् । "कल्पनावशतः पञ्चानां रसानां कषायसंज्ञा व्यवहारः" इति । लवणस्य कल्पनायोगाभावान्मधुरकषायोऽम्लकषायस्तिक्तकषायः कटुकषायः कषायकषायश्चेति रसानां स्वरसादिकल्पनायोगो न सम्भवति । उक्तञ्चैतत् । तस्माद् गुणगुणिनोरभेदोपचारादिह रसग्रहणेन तदाश्रयाणां द्रव्याणां ग्रहणं मन्तव्यम् । रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना । पञ्चधैव कषायाणां स्वरसादीनां सा च कल्पना यथापूर्वं बलाधिकाऽधिकशक्तिः । एवं फाण्टाख्या कल्पना सबला । ततोऽप्यधिकशक्तिः शीताख्या । ततोऽप्यधिकवीर्या शृताख्या । ततोऽप्यधिकशक्तिः कल्काख्या । चूर्णाख्यायाश्च कल्पनाया अन्तर्भावादपृथग्ग्रहणं, कल्काख्यायाश्च कल्पनायाः स्वरसाख्यकल्पनाया अधिका शक्तिः । ननु चूर्णादनन्तरं कल्कः क्रियते न तु कल्कादनन्तरं चूर्णं तस्मात् पञ्चानां कल्पनानां मध्ये चूर्णकल्पनैव निर्देष्टुं युक्ता न तु कल्ककल्पना । युक्तमाह भवान् । किन्तु लवणस्य कषायसंज्ञायां समावेशो माभूदिति कल्पनानां मध्ये कल्क इति निर्देशः कृतो न चूर्ण इति तस्माल्लवणे न सम्भवति कषायसंज्ञासमावेशः ॥ ५ ॥

सद्य इति । सद्यस्तत्क्षणं समभूमेः सम्यगुद्धृतमुत्खातं समनन्तरं क्षुण्णं पिष्टं सद्यः समुद्धृतक्षुण्णं तस्माद्वस्त्रपीड़िताद् यः स्रवेत् स स्वरसः कल्पनाकषायः समुद्दिष्टः संज्ञायां सङ्केतितः । कल्कइति । द्रवेणाप्लुतः पिष्टः सन् कल्क इति कल्पनाकषायः सङ्केतितः । यद् द्रव्यं द्रवेणाप्लुतं शुष्कमेव पिष्टं सकल्पनाकषायश्चूर्ण इति गदितस्तेन कल्कस्यैवायं भेद इति नासौ कल्पनेति शङ्कनीयम् । शृतइति । यद् द्रव्यं द्रवेणाप्लुत्य शृतं स कल्पनाकषायः क्वाथ इति कल्प्यते । शीतइति । यद् द्रव्यं द्रवे सकलां रात्रिं स्थितं स कल्पनाकषायः शीत इत्युच्यते । सद्य इति । यद् द्रव्यं द्रवेऽभिषुत्य सद्यः पूतं क्रियते स कल्पनाकषायः फाण्ट इति संकीर्तितः । मानञ्च कल्पना च मानकल्पने तेषां स्वरसादीनां मानकल्पने तद्व्याध्यादिबलेन युञ्ज्यात् । आदिशब्देन कोष्ठबलादीनां ग्रहणम् । तच्च सम्यग्रसवीर्यादीन् दोषधात्वाद्यालोच्य प्रथममनन्तरं व्याध्यादिबलञ्च ततः स्वरसादीनां मानकल्पने युञ्ज्यान्न नियमं कल्पेत्यत आह । तथा चञ्चवचनं मुनेः ।

मध्यन्तु मानं निर्दिष्टं स्वरसस्य चतुःपलम् ॥ ८ ॥
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये ॥ ९ ॥
क्वाथं द्रव्यपले कुर्यात् प्रस्थार्द्धं पादशेषितम् ॥ १० ॥
शीतं पले पलैः षड्भिश्चतुर्भिश्च ततोऽपरम् ॥ ११ ॥
स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्द्धितम् ।
कल्कस्नेहद्रवं योज्यमधीते शौनकः पुनः ॥
"स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशञ्चतुर्थं षष्ठमष्टमम् ॥"
पृथक् स्नेहसमं दद्यात् पञ्चप्रभृति तु द्रवम् ॥ १२ ॥
नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ।
वर्णादिसम्पच्च यदा तदैनं शीघ्रमाहरेत् ॥ १३ ॥

---

"मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः । आलोच्य देशकालौ च योज्या तद्वच्च कल्पना" इति ॥ ६—७ ॥

मध्यमिति । मध्यमं मानं मात्रा स्वरसस्य चतुःपलम् । पेष्यस्येति । पेष्यस्यौ-भयरूपस्य कल्कस्य चूर्णस्य वा कर्षं मध्यं मानं तच्च पेष्यस्य कर्षं द्रवस्य पलत्रये प्रक्षिप्यालोड्यम् । क्वाथमिति । क्वाथं द्रव्यपले द्रवस्य प्रकृतत्वात् तस्य प्रस्थार्द्धं दत्त्वा तच्च श्रपणेन पादशेषं कुर्यात् । शीतमिति । शीतं कषायं पले द्रव्यस्य षड्भिः पलैर्द्रवस्य कुर्यात् । ततः शीतकषायादनन्तरं फाण्टाख्यं प्रकृतत्वाद् द्रव्यस्य पले चतुर्भिर्द्रवस्य पलैः कुर्यात् । पञ्चविधायां कषायकल्पनायां मध्यमं मानमस्माच्च मानाद्देश-कालादीन् समीक्ष्योनाधिकभावो मात्राया. स्वबुद्ध्या कल्प्यः ॥ ८—११ ॥

स्नेहपाक इति । स्नेहपाके विधातव्ये कल्कस्नेहद्रवाणाममानोक्तौ मानवचनस्य विशिष्टस्यानिर्देशे चतुर्गुणविवर्द्धितं कल्कस्नेहद्रवं योज्यम् । कल्कश्च स्नेहश्च द्रवश्च तेषां समाहारः कल्कस्नेहद्रवम् । तदेवं कल्कात् स्नेहश्चतुर्गुणः स्नेहाद् द्रवश्चतुर्गुण इति बोध्यम् । पञ्चप्रभृति तु द्रवं पृथक् स्नेहसममित्यायमित्यत्र योज्यमिति । शौनकः प्रस्तुततन्त्रकृदधीत एवं पठति । स्नेहेत्यादि॥ स्नेहः कदाचिच्छुद्धाम्बुना पच्यते कदाचिन्निः-क्वाथेन कदाचित् स्वरसेनेति तैः शुद्धाम्बुनिःक्वाथस्वरसैः स्नेहे सिध्यति सति क्रमेण कल्कस्यांशं चतुर्थं षष्ठमष्टमं योजयेदिति । यत्र चतुर्भ्योऽधिकानि द्रवाणि तत्र पृथक् स्नेहसमानि नतु परस्परसाम्येन मिलितानि स्नेहाच्चतुर्गुणानि । पाकलक्षणमधुना लक्ष-यन्नाह,—नाङ्गुलीति । कल्कविषयेऽङ्गुलिग्राहित्वं यदा न भवत्यग्नौ प्रक्षिप्ते वा स्नेहे सशब्दता चटचटायित्वं न भवति तथा वर्णगन्धरसस्पर्शानां यदा सम्यक्शुभत्वं स्यात्तदा तस्मिन् कालेऽश्यामलच्छायामन्तं स्नेहं शीघ्रमाहरेत् । अग्नितः स्नेहस्य कटाहस्थितस्य सकालोऽवतरणे इत्यर्थः ॥ १२—१३ ॥

घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः।
लेहस्य तन्तुमत्ताप्सु मज्जनं शरणं न च ॥
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥
मन्दः कल्कसमे किञ्चिच्चिक्कणो मदनोपमे।
किञ्चित्सीदति कृष्णे च वर्त्तमाने च पश्चिमः ॥
दग्धोऽत ऊर्द्ध्वं निःकार्यः स्यादामस्त्वग्निसादकृत्।
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ॥ १४ ॥
शाणं पाणितलं मुष्टिः कुडवं प्रस्थमाढकम्।
द्रोणं वहञ्च क्रमशो विजानीयाच्चतुर्गुणम् ॥ १५ ॥
द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम् ॥ १६ ॥
पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ १७ ॥

---

अन्यदपि स्नेहपाकलक्षणमस्ति तदाह,—घृतस्येति। घृताख्यस्य स्नेहस्य पच्यमानस्य फेनोपशमो यदा जायते तैलाख्यस्य च स्नेहस्य सम्यक् पाकं प्राप्तस्य तदुद्भवः फेनोत्पत्तिः स्यात्तदा घृततैलयोः पाको भवति। लेहस्य पाकं प्राप्तस्य तन्तुमत्ता तन्तुप्रादुर्भावः पाकः। तथाप्सु मज्जनं पाकलक्षणं। शरणाशरणरूपतया द्विधा सम्भवत्यत इदमाह। शरणं नच सर्वलेहस्याप्सु मज्जनं भवति नतु शरणमवयवशो गमनं तथापि तस्य पाकः सम्पन्न इति वेद्यम्। पाकस्त्रिप्रकारो मन्दश्चिक्कणः खरचिक्कणाख्यः। स्नेहपाकविधौ कियदाख्ये वस्तुजाते कल्कसमे यथा कल्कोऽङ्गुलिनोद्वेष्टयन्याति तथा कियतोऽपि स्नेहपाकस्याङ्गुलिग्राहिता न भवति स स्नेहपाको मन्द उच्यते। मदनोपमे कृते सत्येवमङ्गुलिग्राहिणि स्नेहपाकस्य स चिक्कणः पाकः। किञ्चिदीषत्कृते सति सीदति तथा वर्णतः कृष्णे च तस्मिंस्तथा वर्त्तमाने वर्त्तिमागच्छति सति पश्चिमः खरचिक्कणाख्यः पाकः। अतोऽस्मात् खरचिक्कणादूर्द्ध्वमनन्तरं दग्धो भवति स्नेहः सच निःकार्यः स्यात्। यथानिरूपितकार्यकरणो न भवेन्निर्वीर्यत्वात्। आम ईषत्पाकः स्नेहः पुनरप्यग्निसादकृत्। मृदुर्मन्दपाकस्नेहो नस्ये तद्विषये योज्यः। खरः खरचिक्कणः स्नेहोऽभ्यङ्गे तद्विषये प्रयोज्यः। पाने तथा बस्तौ तद्विषये चिक्कणः प्रयोज्यः ॥ १४ ॥

अधुना मानसंख्यायां यथास्वं संज्ञाविधानार्थमाह,—शाणमिति। शाणादयो वहपर्यन्ताः क्रमेण चतुर्गुणाः पाणितलादिसंज्ञा ज्ञेयाः। द्विगुणमिति। शुष्कार्द्रयोरेकस्मिन् योगे तुल्यपरिमाणनिर्दिष्टयोः शुष्कद्रव्यादार्द्रं द्रव्यं द्विगुणं दत्त्वा योजयेत्। शुष्कद्रव्ययोर्वा द्रवद्रव्ययोस्तुल्यपरिमाणनिर्दिष्टयोः शुष्कद्रव्याभावे सत्यार्द्रं द्रव्य द्विगुणं कृत्वा योजयेत्। शुष्कद्रवद्रव्ययोरेकस्मिन् योगे तुल्यपरिमाणेन निर्दिष्टयोः शुष्कद्रव्याद् द्रवद्रव्यं कुडवादिपरिमाणसंज्ञया निर्दिष्टं द्विगुणं कृत्वा योजयेत्। पेषणेति।

कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितम् ।
कल्कीकुर्याच्च भेषज्यमनिरूपितकल्पनम् ॥ १८ ॥
द्वौ शाणौ वटकः कोलं बदरं द्रङ्क्षणश्च तौ ।
अक्षं पिचुः पाणितलं सुवर्णं कवलग्रहः ॥
कर्षो बिडालपदकं तिन्दुकं पाणिमानिका ।
शब्दान्यत्वमभिन्नेऽर्थ शुक्तिरष्टमिका-पिचू ॥
पलं प्रकुञ्चो बिल्वञ्च मुष्टिराम्रं चतुर्थिका ।

---

निर्द्रवेऽनुक्तद्रवे पेषणे लोडनार्थं वारि योजयेत् । स्नेहपाके वाऽनुक्तद्रवे वार्य्येव योजयेत् । कल्पयेदिति । यत्र यत्र प्रयोगे द्रव्याणां परिमाणं विशिष्टं नोक्तं तत्र तत्र द्रव्याणां सदृशान् भागान् कल्पयेत् ॥ १५—१८ ॥

द्वाविति । द्वौ शाणौ वटकः । कोलं बदरम् । द्रङ्क्षणश्चेत्यत्र शब्दान्यत्वं नतु तत्त्वतो भेदः । तौ द्वौ द्रङ्क्षणावक्षं तथा पिचुस्तथा पाणितलं तथा सुवर्णं तथा कवलग्रहस्तथा कर्षस्तथा बिड़ालपदं तथा तिन्दुकस्तथा पाणिमानिकेत्यवाभिन्नेऽर्थे शब्दानेकत्वम् । तथा द्वौ पिचू शुक्तिस्तथाऽष्टमिका इत्यत्रापि शब्दान्यत्वमर्थस्यैक्ये सति पलं प्रकुञ्चो बिल्वञ्च मुष्टिराम्रं चतुर्थिकेत्यत्रापि शब्दानां वैलक्षण्ये सति नार्थतो भेदः । द्वे पले प्रसृत इत्युच्यते । तौ द्वौ प्रसृतावञ्जलिः कथ्यते । तौ द्वावञ्जली मानिका । अष्टौ पलानीत्येव । आढकादीनां शब्दानां स्वरूपतो भिन्नानां नार्थतो भेदस्तथैव द्रोणादीनां शब्दानां । पलशतं तुला गद्यते । तानि पलशतानि विंशतिर्भार उच्यते । क्वाथादीनामुत्तमादिमात्राः संग्रहादवधार्याः । संग्रहे ह्येवं पठ्यते । क्वाथो निर्यूहस्तत्र भेद्यान्यौषधान्यणुशो भेदयित्वा छेद्यानि छेदयित्वा प्रक्षाल्योदकेन शुचौ रुक्षायामधःप्रलिप्तायां ताम्रायां मृन्मयान्यतमायां स्थाल्यां समावाप्य बाहुल्यपानीय-ग्राहितामौषधानामाकलय्य यावता सूक्तरसस्तस्य तावदुदकमासिच्योच्छ्रीषयेच्चाग्नावधि-श्रयेत् । यावन्मात्रोदकदाने तथा तदवशिष्टत्वे च तत्र नियमसामर्थ्यात् । क्वाथ्य-द्रव्यपरिमाणस्यात्र यत्परिमाणानि द्रव्याण्युदकमियत्प्रमाणं तदवशिष्टता च यत्प्रमाणेन न नियमोऽस्तिरेवम्विधा विद्यते किन्त्वभ्यूहनीयमेतत्सर्वमित्यत्र विधिः । यथा,— अग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन् दर्व्या च विघट्टयन् मृदुना च परितः समुपगच्छताऽनलेन साधयेदवतार्य च सुपरिस्रुतं यथार्हंस्पर्शं प्रयुञ्जीत । क्षीरादिसहितञ्च द्रव्यं न सम्यङ्मुक्तरसं भवति इति वारिक्वाथपूर्वकं क्षीराद्यैस्तदुपदेशे तु यदग्र्यं र क्वाथयेत् । शीतसलिलाप्लुतन्तु निशापर्युषितं पूर्वं शीतः कषाय उष्णाम्भसि चूर्णोऽभिषुतः पूतः फाण्ट इति । तत्र सम्यग् रसवीर्यादीन्यौषधस्य समीक्ष्य व्याध्यातुरबलादिबलतश्च निर्यासादीनां कल्पनां मात्राञ्च संप्रयोजयेत् । "थाच केचिदाहुः । "मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलञ्च यः । आलोच्य

द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥
आढकं भाजनं कंसो द्रोणः कुम्भो घटोऽर्मणम्।
तुला पलशतं तानि विंशतिर्भार उच्यते ॥ १९ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा।
सौम्यं पथ्यञ्च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥ २० ॥
इति वैद्यपतिसिंहगुप्तस्य सूनोर्वाग् भटाचार्य्यस्य कृता-
वष्टाङ्गहृदयसंहितायां कल्पस्थाने भेषजकल्पोनाम
षष्ठोऽध्यायः ॥ ६ ॥

---

देशकालौ च भेषज्यमवचारयेत्"। एवञ्च सर्व्वमभ्यूह्यात कर्त्तव्यं न निश्चितं कृत्वोक्तेन विधिनेति एतदेवमुपदिष्टं बुद्धिमतां ज्ञानप्रबोधाय। यथातु सर्वं भिषजो विज्ञास्यन्ति तथैवोपदेक्ष्यत इति। निर्यासे मध्यमा मात्रा चतुष्फलं कल्कचूर्णयोः कर्षः पलत्रयं तदालोड़ने निर्यूहे भेषजपलमुदकार्द्धप्रस्थे विशल्य पादशेषमवतारयेत्। शीतफाण्टयो-रौषधपलं षड्भिश्चतुर्भिरम्बुपलैरासुतमिति। तथा शाणपरिमाणस्य पाणितलवाचकस्य किमपि परिमाणं नोक्तं येनासौ परिच्छिद्यत इति न वाच्यम्। संग्रहे तत्परिमाणस्योक्त-त्वात्। तत्र ह्युक्तं षड्वंशो मरीची ताः षट्मरीच्यः सर्षप उच्यते। अष्टौ सर्षपास्तण्डुलः। तौ द्वौ तण्डुलाविको धान्यमाषः। तौ द्वौ धान्यमाषौ यवः। अतःपरं चतुर्गुणवृद्धाम्बुका माषक-शाण-कर्ष-पल-कुडव-प्रस्थाढक-द्रोणवहाः कल्प्यन्ते। एवं चतुर्भिर्माषकैः शाणस्य परिमाणं परिभिद्यते। धरणन्तु पलस्य दशमी भागः। माषकस्य तु पर्यायो हेमः। कर्षस्य षोडशिका। आढकस्य तु पर्यायाः कंसः पात्रं भाजनञ्च। द्रोणस्य पर्यायोनल्वणः तथा अर्मणः तथोन्मान-स्तथा घटः कुम्भः कलसश्च। द्रोणद्वयञ्च शूर्पं इति ॥ १९ ॥

शैलभेदाद् द्रव्यविशेषमाह ;—हिमवदिति। हिमवत्पर्वतेन विन्ध्यशैलेन च बाहुल्येन वसुन्धरा व्याप्ता। तत्र तयोर्मध्यादाद्यं हैमवतमौषधं सौम्यं पथ्यञ्च स्वभावाद्भवति। वैन्ध्यमौषधमाग्नेयं न तथा देहस्य पथ्यं स्यादिति ॥ २० ॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां कल्पस्थाने भेषजकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥

समाप्तमिदं कल्पस्थानम् ॥

---

# अष्टाङ्गहृदयम्।

## उत्तरस्थानम्।

### प्रथमोऽध्यायः।

अथातो बालोपचरणीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥ १॥
जातमात्रं विशोध्योल्बाद् बालं सैन्धवसर्पिषा।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत्॥ २॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत्।
अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम्॥ ३॥
"अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे
आत्मा वै पुत्रनामासि स जीव शरदां शतम्॥ ४॥
शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि।
नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु"॥ ५॥

---

अनन्तरमुत्तरस्थानारम्भः। यतः कायाख्यमाद्यमङ्गं तच्च पूर्वैः स्थानैः सवमुक्तं। अधुना बालादीनामुत्तरेषामङ्गानामवसर इत्युत्तराख्यं स्थानमुच्यते। तत्रापि यथोद्दिष्टस्तथा निर्देश इति बालाख्यमङ्गं विवक्षुराह,—अथात इति। बालस्य शिशोरुपचरणं बालोपचरणं तस्मै हितः। शेषं पूर्ववत्। इतीति। इतीत्यादिना स्वमनीषिकापरिकल्पितत्वमस्य तन्त्रस्य निराकरोति॥ १॥

जातमात्रमिति। जातमात्रं सद्य एवोद्गतं बालमुल्बादपरापरपर्य्यायात् सैन्धवयुक्तेन घृतेन विविधैः प्रकारैः शोधयित्वा पश्चात् प्रसूत्या प्रसवेन क्लेशितं बालं बलातैलेन सेचयेत्। पश्चात् पाषाणयोर्वादनमस्य कर्णमूले कारयेद् वैद्यः।

स्वस्थीभूतस्य नाभिञ्च सूत्रेण चतुरङ्गुलात् ।
बद्ध्वोर्द्ध्वं वर्द्धयित्वा च ग्रीवायामवसञ्जयेत् * ॥ ६ ॥
नाभिञ्च कुष्ठतैलेन सेचयेत् स्नापयेदनु ।
क्षीरिवृक्षकषायेण सर्वगन्धोदकेन वा ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ॥ ७ ॥
ततो दक्षिणतर्जन्या तालून्नम्याऽवगुण्ठयेत् ।
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ॥ ८ ॥
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ।
ऐन्द्री-ब्राह्मी-वचा-शङ्खपुष्पी-कल्कं घृतं मधु ॥ ९ ॥
चामीकर-वचा-ब्राह्मी-ताप्य-पथ्या-रजोकृताः ।
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ॥ १० ॥
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ।
प्राजापत्येन विधिना जातकर्माणि कारयेत् ॥ ११ ॥

---

* मवसज्जयेदेति वा पाठः ।

---

अनन्तरमस्य दक्षिणकर्णे इमं वक्ष्यमाणं मन्त्रमुच्चारयेत् । तमेव मन्त्रमाह, अङ्गा-दित्यादि ॥ २—५ ॥

स्वस्थीभूतस्येति । समाश्वस्तस्य च बालस्य नाभिं चतुरङ्गुलादूर्द्ध्वं सूत्रेण बद्ध्वानन्तरं छेदयित्वा ग्रीवायां योजयेत् । नाभिञ्च कुष्ठतैलेन सेचयेत् । अनु पश्चात् क्षीरिवृक्ष-कषायेण सेचयेत् । अश्वत्थोदुम्बर-प्लक्ष-वट-पिप्पलसंज्ञिताः । पञ्चैते क्षीरिणो वृक्षाः समाख्याता विचक्षणैः । अथवा सर्वेषां गन्धानां चन्दनादीनां जलेन स्नापयेत् । किंभूतेन ? कोष्णेन । कथं ? तप्ताभ्यां रूप्यसुवर्णाभ्यां निमज्जनैरसकृत्सेचनैः ॥६—७॥

तत इति । अनन्तरं दक्षिणहस्ततर्जन्या वैद्यस्तालुमुन्नम्य शिरसि पिचुना तैला-क्तेनावगुण्ठयेत् । अस्य च बालस्य प्राश्यं लेहं मेधाद्यर्थं प्रयोजयेत् । कियन्मात्रं ? हरेणुप्रमाणं । तथा अभिमन्त्रितं प्राङ्मन्त्रेण । किन्तत् प्राश्यमित्याह । ऐन्द्री इन्द्रवारुणी ; ब्राह्मी मण्डूकपर्णी ॥ ८—९ ॥

चामीकरेति । अथवा सुवर्णादिकं सूक्ष्मं चूर्णीकृत्य लिह्यात् । रजीकृता इति । अहमंन इत्यादिना सुलोप इत्त्वञ्च । हेमधात्रीचूर्णं वा मधुघृतयुक्तं लिह्यात् ॥ १० ॥

गर्भांभ इति । ततोऽनन्तरं गर्भांभः सर्पिषा सैन्धवयुक्तेन वामयेत् । प्राजापत्येनेति । ततो जातकर्माणि वेदविहितानि प्राजापत्येन गृह्योक्तेन विधिना भिषक् कारयेत् ॥११॥

शिराणां हृदयस्थानां विवृतत्वात् प्रसूतितः ।
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ १२ ॥
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ।
अनन्तामिश्रिते मन्त्रपाविते प्राशयेच्छिशुम् ॥ १३ ॥
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ।
प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ।
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥
मातुरेव पिबेत् स्तन्यं तत्परं देहवृद्धये ।
स्तन्यधात्र्यावुभे कार्ये तदसम्पदि वत्सले ॥ १५ ॥
अव्यङ्गे * ब्रह्मचारिण्यौ वर्णप्रकृतितः समे ।
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥
हिताहारविहारेण यत्नादुपचरेच्च ते ॥ १६ ॥
शुक्क्रोधलङ्घनायासाः स्तन्यनाशस्य हेतवः ।
स्तन्यस्य सीधुवर्ज्याणि मद्यान्यानूपजा रसाः ।
क्षीरं क्षीरिण्य ओषध्यः शोकादेश्च विपर्ययः ॥ १७ ॥

---

* अव्यग्रे इति वा पाठः ।

---

स्तन्यप्रवर्त्तने हेतुमाह, शिराणामिति । हृदयाश्रितानां शिराणां प्रसवाद्धेतोरयंद विवृतत्वं तस्माद कारणात् तृतीयदिवसे कदाचिच्चतुर्थे योषितां स्तन्यं प्रवर्त्तते ॥ १२ ॥

प्रथमे इति । यत एवं दिनत्रिचतुर्मात्रं क्षीराभावस्तस्माद्धेतोः प्रथमेऽह्नि त्रीन् कालान् मधुघृते यवासकयुक्ते मन्त्रेण पाविते शिशुं भोजयेत् ॥ १३ ॥

द्वितीय इति । द्वितीये दिवसे तृतीये च दिवसे लक्ष्मणासिद्धं घृतं त्रीनेव कालान् भोजयेत् । अनन्तरं तस्य शिशोः पाणितलेन मध्येन सम्मितं तत्प्रमाणं नवनीतप्रयोगात् पूर्वं निवारितस्तन्यस्यास्य बालस्य द्वौ कालौ नवनीतं स्तन्यानुपानं प्रयोजयेत् ॥ १४ ॥

मातुरिति । बालो मातुर्जनन्या एव स्तन्यं पिबेत् । कुतः ? यस्माच्च तस्यास्तन्यमतिशयेन देहस्य वृद्धये स्यात् । तदसम्पदि मातृस्तन्यासम्पत्तौ द्वे स्तन्यधात्र्यौ च वत्सले स्नेहले बालस्य वात्सल्यकामे कार्ये, तथा व्यङ्गत्वरहिते, ब्रह्मचारिण्यौ वर्जितमैथुने; वर्णेन प्रकृत्या च तुल्ये ; तथा निरामये ; मध्यवयस्के ; जीवद्वत्से लौल्यवर्जिते कामलोभादिरहिते । आदरयुक्ते । ते हितेनाहारेण यत्नादुपाचरेत् ॥१५—१६॥

शुगिति । शुगादीनि स्तन्यनाशस्य कारणानि । शुक् शोकः । स्तन्यस्य मद्यानि

विरुद्धाहारभुक्तायाः क्षुधिताया विचेतसः ।
प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ १८ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
ह्रस्वेन पञ्चमूलेन स्थिरया वा सितायुतम् ॥१९ ॥
षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।
जागृयुर्बान्धवास्तस्य दधतः परमां मुदम् ॥ २० ॥
दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः ।
कारयेत् सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २१ ॥
बिभ्रतोऽङ्गैर्मनोह्वालरोचनागुरुचन्दनम् ।
नक्षत्रदेवतायुक्तं बान्धवं वा समाक्षरम् ॥ २२ ॥
ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ॥
प्रागुदक्शिरसः कुर्यात् बालस्य ज्ञानवान् भिषक् ॥ २३ ॥
शुचिधौतोपधानानि निर्वलीनि मृदूनि च ।
शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ॥ २४ ॥

---

हेतवः। किंभूतानि ? सीधुवर्ज्यानि। आनूपजाश्च रसाः ; तथा क्षीरवल्य ओषध्यो जीवन्त्याद्याः। शीतादिवैपरीत्यञ्च ॥ १७ ॥

विरुद्धेति। तथा विरुद्ध आहारो भुक्तो यया तस्यास्तया बुभुक्षिताया निन्दितायाश्च, तथा प्रदुष्टदोषाया गर्भिण्याश्च सम्बन्धि स्तन्यमुपयुक्तं बालस्य रोगहेतुः ॥ १८ ॥

स्तन्याभाव इति। स्तन्यस्याभावे सति छागं पयो गव्यं वा छागतुल्यगुणं पिबेत्। छागसमानगुणं गव्यं कथं स्यात् तथाह, ह्रस्वेनेत्यादि। ह्रस्वेन पञ्चमूलेन सिद्धं शालपर्णीपृश्निपर्णीसिद्धं वा शर्करायुतं पिबेत् ॥ १९ ॥

षष्ठीमिति। अन्यथापि तस्य शिशोर्बान्धवा विहितरक्षादयो निशां जागृयुः। षष्ठीं पुनस्तमस्विनीं विशेषेण यत्नेन जागृयुः। किं कुर्वतः ? परं हर्षं धारयन्तः ॥२० ॥

दशम इति। दशमे दिने पूर्णे सति सूतिकाया उत्थानं कारयेत्। कथं कारयेत् ? स्वकुलयोग्यैर्विधानैः। बालस्य नामार्चितं प्रशस्तमनुगतं कुलजात्यादिभिः। किंभूतस्य ? अङ्गैः पाण्यादिभिर्मनोह्वादीनि धारयतः। किम्भूतं नाम ? नक्षत्रस्य यासौ देवता तया युक्तं, अथवा बान्धवं ज्ञातिपूर्वजं समवर्णं न तु विषमाक्षरं ॥ २१—२२ ॥

तत इति। ततो नामकरणादनन्तरं प्रकृतिभेदेन विकृतिविज्ञानीये उक्तानि यानि रूपाणि तेनायुषः परीक्षणं बालस्य ज्ञानवान् सुमतिर्वैद्यः कुर्यात्। किम्भूतस्य ? प्राक्शिरस उत्तरशिरसो वा, तथा शुच्यादिगुणयुक्तान्युपधानानि शय्यायामास्तरणार्थं वासांसि कुर्य्यात्, तथा रक्षोघ्नैर्द्रव्यैर्धूपितानि ॥ २३—२४ ॥

काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ॥ २५ ॥
जीवत्खड्गादिशृङ्गोत्थान् सदा बालः शुभान् मणीन् ।
धारयेदौषधीः श्रेष्ठा ब्राह्मैन्द्रीजीवकादिकाः ॥ २६ ॥
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात् सततं वचाम् ।
आयुर्मेधा-स्मृति-स्वास्थ्यकरीं रक्षोभिरक्षिणीम् ॥ २७ ॥
पञ्चमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत् ।
षष्ठेऽन्नप्राशनं मासि क्रमात्तत्र प्रयोजयेत् ॥ २८ ॥
षट्सप्तमाष्टमासेषु नीरुजस्य शुभेऽहनि ।
कर्णौ हिमागमे विध्येत् धात्र्यङ्कस्थस्य सान्त्वयन् ॥ २९ ॥
प्राग् दक्षिणं कुमारस्य भिषग् वामं तु योषितः ।
दक्षिणेन दधत् सूचीं पालिमन्येन पाणिना ॥ ३० ॥
मध्यतः कर्णपीठस्य किञ्चिद् गण्डाश्रयं प्रति ।
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ॥ ३१ ॥
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ।
विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात् ॥ ३२ ॥

---

काक इति । काकश्च वस्त्रादिधूपने शस्तः । किम्भूतः ? विशस्तो व्यापादितः नतु स्वयं मृतः, तथा त्रिवृता युक्तः ॥ २५ ॥

जीवदिति । बालः सर्वदा शुभहेतून् मणीन् बिभृयात् । किम्भूतान् ? जीवन्तश्च ते खड्गादयश्च· तेषां शृङ्गाणि तेभ्य उत्थानं येषां तान् जीवतामेव ये गृहीता इत्य: । शृङ्गग्रहणमुपलक्षणार्थम् अतएव सर्पादिजानपि मणीन् धारयेत् । तथा औषधीर्ब्राह्म्यादीः शुभाः धारयेत् । कैः ? पाण्यादिभिः । विशेषेण सर्वदा वचां धारयेत् । किम्भूतां वचाम् । आयुरादिकरणहेतुं तथा रक्षोनिवारिणीं ॥ २६—२७ ॥

पञ्चम इति । स्पष्टम् । षड़िति । अनन्तरं षष्ठ मासि सप्तमेऽष्टमे वा बालस्य नीरुजस्य हिमागमे शुभे दिवसे कर्णौ विध्येत् । धात्र्युत्सङ्गस्थितस्य । धात्री माता स्तनपायिनी च । कथं विध्येत् ? सान्त्वयन्, प्रीतिवचनादिना ॥ २८—२९ ॥

प्रागिति । कुमारस्य प्राक् पूर्वं दक्षिणं कर्णं योषितस्तु वामं वैद्यो विध्येत् । किं कुर्वन् ? दक्षिणेन हस्तेन सूचीं दधन् । वामेन पाणिना पालिं दधन् । क्व विध्येत् ? कर्णपीठस्य मध्यभागे किञ्चित् मनाक् गण्डस्थाने । कीदृशस्य बालस्य ? सम्यक् निश्चलंधृतस्य । क्व विध्येत् ? दैवकृते छिद्रे । किंभूते ? जरायुमात्रेण

नोर्द्ध्वं न पार्श्वतो नाधः शिरास्तत्र हि संश्रिताः ।
कालिका मर्मरी रक्ता तद्व्यधाद् रागरुग्ज्वराः ।
सशोफदाहसंरम्भमन्यास्तम्भापतानकाः ॥ ३३ ॥
तेषां यथामयं कुर्याद् विभज्याशु चिकित्सितम् ॥ ३४ ॥
स्थाने व्यधान्न रुधिरं न रुग्रागादिसम्भवः ॥ ३५ ॥
स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।
आमे तैलेन सिञ्चेच्च बहलां तद्वदारया ॥ ३६ ॥
विध्येत् पालीं हितभुजः सञ्चार्याऽथ स्थवीयसी ।
वर्त्तिस्त्र्यहात्ततो रूढं वर्द्धयेत शनैः शनैः ॥ ३७ ॥
अथैनं जातदशनं क्रमेणापनयेत् स्तनात् ।
पूर्वोक्तं योजयेत् क्षीरमन्नञ्च लघु बृंहणम् ॥ ३८ ॥
पियाल-मज्ज-मधुक-मधु-लाजासितोपलैः ।
अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥ ३९ ॥
दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।
संग्राही धातकीपुष्प-शर्करा-लाज-तर्पणैः ॥ ४० ॥

---

प्रच्छन्ने स्थगिते । तथा रविरश्मिभिरवभासिते उद्योतिते, तथाऽलक्तकरसेनाङ्किते चिह्निते । कथं विध्येत् ? लाघवात् सकृदेकवारमेव, तथा ऋजु स्पष्टं कृत्वा नोपरिष्टान्नाधस्तात् न पार्श्वतो विध्येत् । कुत इत्याह, हि यस्मात् तत्र शिरा आश्रिताः । ता एवाह, कालिकेत्यादि । तदिति । तासाञ्च व्यधाद् रागादयः स्युः ॥३०-३३॥

तेषामिति । तेषाञ्च रोगादीनां यथास्वं निरूप्य चिकित्सितं कुर्यात् ॥ ३४ ॥

स्थान इति । स्थाने व्यधान्न रुधिरं स्रवति, न रुगादीनां सम्भवः ॥ ३५ ॥

स्नेहाक्तमिति । अनु कर्णवधस्य पश्चात् सूत्रं स्नेहलिप्तं सूच्यनुस्यूतं कर्णे निधापयेत् । आमे तैलेन सेचयेत् । बहलां घनां पालीं तद्वत् पूर्ववदारया विध्येत् हिताशिनः सतः । अनन्तरं त्र्यहादूर्द्ध्वं स्थूलतरा वर्त्तिः सञ्चार्या ततो रूढं कर्णं शनैः शनैर्वर्द्धयेत् ॥ ३६—३७ ।

अथेति अनन्तरमेनं शिशुं जातदन्तं सन्तं स्तनात् क्रमेणाऽपसारयेत्, न सहसा । पूर्वोक्तं छागादिकं क्षीरमन्नञ्च लघुबृंहणं योजयेत् ॥ ३८ ॥

पियालेति । पियालादिभिर्मोदकोऽपस्तनस्य शिशोः प्रीणनो योज्यः । बालबिल्वादिभिर्दीपनो मोदको योज्यः । धातक्यादिभिः संग्राही योज्यः ॥ ३९—४० ॥

रोगांश्चास्य जयेत् सौम्यैर्भेषजैरविषादकैः ।
अन्यत्रात्ययिकाद् व्याधेर्विरेकं सुतरां त्यजेत् ॥ ४१ ॥
त्रासयेन्नाविधेयं तं त्रस्तं गृह्णन्ति हि ग्रहाः ॥ ४२ ॥
वस्त्रवातात्खरस्पर्शात् पालयेल्लङ्घिताच्च तम् ॥ ४३ ॥
ब्राह्मी-सिद्धार्थक-वचा-सारिवा-कुष्ठ-सैन्धवैः ।
सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद् घृतम् ॥
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ॥ ४४ ॥
वचेन्दुलेखा-मण्डूकी-शङ्खपुष्पी-शतावरी । *
ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ॥ ४५ ॥
अष्टाङ्गं विपचेत्सर्पिः प्रस्थं क्षीरं चतुर्गुणम् ।
तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ॥ ४६ ॥
अजाक्षीराभयाव्योषपाठोग्राशिग्रुसैन्धवैः ।
सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ॥ ४७ ॥

---

* सारस्वतघृतम् । त्रिफला-त्र्यूषणानन्ता-समङ्गा-शारिवा-वचाः । ब्राह्मी-पाठा-द्विहती-द्विशिरा-द्विपुनर्नवा ॥ सहदेवा रवेर्वल्ली पयस्या गिरिकर्णिका । तोयकुम्भे पचेदेतत् पलांशं पादशेषितम् ॥ तेन कौन्ती-वचा-कृष्णा-कुष्ठ-सैन्धव-सर्षपैः । भीरुपरूषकवचासंयुक्तं पयसा च गोः ॥ पुष्ययोगे घृतप्रस्थं सहेमशकलं शृतम् । पानाभ्यञ्जनतो मेधास्मृत्यायुर्वाग्विशुद्धिदम् ॥ प्रयोक्तव्यं विषघ्नं च सारस्वतमिदं घृतम् । इत्यधिकः पाठः ।

---

रोगानिति । यथावस्थमस्य शिशोः सौम्यैरौषधैरविषादकैरक्षोभकैरामयान् जयेत् । विरेकमतिशयेन वर्ज्जयेदात्ययिकं व्याधिमन्तरेण ॥ ४१ ॥

त्रासयेदिति । न च तं बालमविधेयमनायत्तं कृत्वा त्रासयेन्न भाययेत् । यतस्त्रस्तं बालं ग्रहा गृह्णन्ति ॥ ४२ ॥

वस्त्रेति । वस्त्रवातादिभ्यश्च तं रक्षयेत् ॥ ४३ ॥

ब्राह्मीति । ब्राह्म्यादिभिः कल्कीकृतैः साधितं सर्पिर्वाङ्मेधाकृत् । आयुष्यं पाप्मादिहृद्भूतोन्मादनिबर्हणं च ॥ ४४ ॥

वचेति । वचादिभिः पलिकैश्चतुर्गुणक्षीराद् घृतप्रस्थमष्टाङ्गं पचेत् । अष्टावङ्गानि वचादीनि यस्मिंस्तदष्टाङ्गं । एतत्पीतं धन्यादिगुणम् ॥ ४५—४६ ॥

अजेति । अजाक्षीरादिभिः सिद्धं सारस्वतं घृतं वाङ्मेधादिकरं ॥ ४७ ॥

वचामृता-शठी-पथ्या-शङ्खिनी-वेल्ल-नागरैः ।
अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ॥ ४८ ॥
हेम-श्वेतवचा-कुष्ठमर्कपुष्पी सकाञ्चना ।
हेममत्स्याक्षकः शङ्खः कैटर्यः कनकं वचा ॥ ४९ ॥
चत्वार एते पादोक्ताः प्राश्या मधुघृतप्लुताः ।
वर्षं लीढा वपुर्मेधाबलवर्णकराः शुभाः ॥ ५० ॥
वचा-यष्ट्याह्व-सिन्धूत्थ-पथ्या-नागर-दीप्यकैः ।
शुद्ध्यते वाग्घविर्लीढैः सकुष्ठ-कण-जीरकैः ॥ ५१ ॥

इत्युत्तरस्थाने कौमारतन्त्रे बालोपचरणीयो
नाम प्रथमोऽध्यायः ॥ ७ ॥

---

वचामृतेति । वचादिभिः साधितं घृतं पूर्वेण समानं ॥ ४८ ॥

हेमेति । हेमादिश्लोकोक्ताः पादिकाश्चत्वारो योगा मधुघृताभ्यां सद्रवा वर्षं लीढा वपुरादिकृतः शुभाः ॥ ५० ॥

वचायष्ट्याह्वेति । वचादिभिः सर्पिर्लीढैर्वाक् शस्यते शुध्यत इति चिन्त्यम् । कर्मवत्कर्मकर्तृत्वस्य त्वविषयः ॥ ५१ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने बालोपचरणीयो नाम प्रथमोऽध्यायः ॥ ७ ॥

## द्वितीयोऽध्यायः ।

——:॰:——

अथातो बालामयप्रतिषेधं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

त्रिविधः कथितो बालः क्षीरान्नोभयवर्तनः ।

स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः ॥ २ ॥

यदप्स्वेकतां याति न च दोषैरधिष्ठितम् ।

तद्विशुद्धं पयो वाताद्दुष्टं तु प्लवतेऽम्भसि ।

कषायं फेनिलं रूक्षं वर्चोमूत्रविबन्धकृत् ॥ ३ ॥

पित्तादुष्णाम्लकटुकं पीतराज्यसृ, दाहकृत् ।

कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ॥ ४ ॥

संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ।

यथास्वलिङ्गांस्तद्व्याधीन् जनयत्युपयोजितम् ॥ ५ ॥

शिशोस्तीक्ष्णामतीक्ष्णाञ्च रोदनाल्लक्षयेद्रुजम् ॥ ६ ॥

---

अस्मादनन्तरं बालस्योपचर्यमाणस्य ये रोगास्तच्चिकित्सार्थो बालामयप्रतिषेध उच्यते,— अथात इति ॥ १ ॥

त्रिविध इति । बालस्त्रिःप्रकारः कथितो मुनिभिः, क्षीरवर्तनोऽन्नवर्तन उभयवर्तनश्च । क्षीरान्नाभ्यां यो वर्तते ताभ्यामन्नक्षीराभ्यामदुष्टाभ्यां स्वास्थ्यं भवति । दुष्टाभ्यां तु क्षीरान्नाभ्यां रोगोद्भूतिः ॥ २ ॥

शुद्धं क्षीरं लक्षयति,—यदिति । यत् क्षीरं जलेनैकतां याति वातादिदोषैश्चानधिष्ठितं तद्विशुद्धं । दुष्टस्य लक्षणमाह,—वातादिति । वातदुष्टं क्षीरं जले प्लवते तरति नैकतां गच्छति । कषायादिगुणयुक्तञ्च स्यात् । पित्तादिति । पित्ताद्दुष्टं क्षीरमुष्णाम्लकटुकं । तथा तोये प्रक्षिप्तं पीतराजि स्याद्दाहकरञ्च । कफादिति । कफात् क्षीरं दुष्टं सलवणं घनञ्च स्यात् । अप्सु च मज्जति । संसृष्टलिङ्गमिति । संसर्गाद्दुष्टं क्षीरं संसृष्टलिङ्गं स्यात् । सान्निपातिकं क्षारं त्रिलिङ्गञ्च स्यात् । यथेति । तच्च क्षीरमुपयोजितं बालस्य च यथास्वलिङ्गान् व्याधीन् जनयति ॥ ३—५ ॥

शिशोरिति । बालस्य तीक्ष्णां खरामतीक्ष्णाञ्च रुजं पीडां रोदनाल्लक्षयेत् । अति रोदनेन किञ्चित् रोदनेन च यथायोगं रुजं विद्यादित्यर्थः ॥ ६ ॥

सोऽयं स्पृशेद्भृशं देशं यत्र च स्पर्शनाच्चमः ।
तत्र विद्याद्रुजं मूर्ध्नि रुजं चाचिनिमीलनात् ॥ ७ ॥
हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडितैः ।
कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः * ॥ ८ ॥
आध्मान-पृष्ठनमन-जठरोन्नमनैरपि ।
बस्तौ गुह्ये च विण्मूत्रसङ्गत्रासदिगीक्षणैः ॥ ६ ॥
अथ धात्र्याः क्रियां कुर्याद्यथादोषं यथामयम् ॥ १० ॥
तत्र वातात्मके स्तन्ये दशमूलं त्र्यहं पिबेत् ।
अथवाग्नि-वचा-पाठा-कटुका-कुष्ठ-दीप्यकम् ।
सभार्गी-दारु-सरल-वृश्चिकाली-कणोषणम ॥ ११ ॥
ततः पिबेदन्यतमं वातव्याधिहरं घृतम् ।
अनु चाच्छसुरामेवं स्निग्धां मृदु विरेचयेत् ।
बस्तिकर्म ततः कुर्यात् स्वेदादींश्चानिलापहान् ॥ १२ ॥
रास्नाजमोदा-सरल-देवदारु-रजोऽन्वितम् ।
बालो लिह्याद घृतं तैर्वा विपक्वं ससितोपलम् ॥ १३ ॥

* स्तन्यद्वषान्त्रकूजनैरिति वा पाठः ।

सोऽयमिति । यं देहदेशं स भृशं स्पृशेत् यत्र च देहदेशे स्पर्शनाच्चम एव स्यात्, तत्र देशे रुजं विद्यात् । मूर्ध्नीति । शिरसि पीडामचिनिमीलनाद्विद्यात् । जिह्वौष्ठदशनादिभिर्हृदि पीड़ां विद्यात् । विबन्धादिभिराध्मानादिभिश्च कोष्ठरुजं विद्यात् । बस्तौ गुह्ये च पीड़ां विट्सङ्गादिभिर्विद्यात् ॥ ७—६ ॥

अथेति । अथानन्तरमेव ज्ञात्वा धात्र्या वैद्यो. यथादोषं यथारोगं क्रियां कुर्यात् ॥ १० ॥

तत्रेति । तत्र तेषु वातेन दुष्टे स्तन्ये त्रीणि दिनानि दशमूलं पिबेत् । अथवा चित्रकादीनि क्वथितानि त्र्यहं पिबेत् ॥ ११ ॥

तत इति । अनन्तरं वातव्याधिचिकित्सितोक्तं घृतं पिबेत् । पश्चादच्छसुरां पिबेत् । एवं स्निग्धां सतीं मृदु विरेचयेदारग्वधेन । अनन्तरं बस्तिकर्म्म कुर्यात् । स्वेदनादींश्च मारुतापहान् । आदिशब्देनाभ्यङ्गादिग्रहः ॥ १२ ॥

रास्नेति । रास्नादिचूर्णान्वितं शिशुः सर्पिर्लिह्यात् । अथवा तैः सिद्धं सशर्करं घृतं लिह्यात् ॥ १३ ॥

पित्तदुष्टेऽमृता-भीरु-पटोलो-निम्ब-चन्दनम् ।
धात्री कुमारश्च पिबेत् क्काथयित्वा ससारिवम् ॥ १४ ॥
अथवा त्रिफला-मुस्त-भूनिम्ब-कटरोहिणीः ।
सारिवादिं पटोलादिं पद्मकादिं तथा गणम् ॥ १५ ॥
घृतान्येभिश्च सिद्धानि पित्तघ्नञ्च विरेचनम् ॥
शीतांश्चाभ्यङ्गलेपादीन् युञ्ज्यात् श्लेष्मात्मके पुनः ॥ १६ ॥
यष्ट्याह्व-सैन्धवयुतं कुमारं पाययेद घृतम् ।
सिन्धूत्थपिप्पलीमद्वा * पिष्टैः चौद्रयुतैरथ ॥ १७ ॥
राठपुष्पैः स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ ।
सुखमेवं वमेद्वालस्तीक्ष्णैर्धात्रीं तु वामयेत् ॥ १८ ॥
अथाचरितसंसर्गी मुस्तादिं क्वथितं पिबेत् ।
तद्वत्तगर-पृथ्वीका-सुरदारु-कलिङ्गकान् ।
अथवातिविषा-मुस्त-षड् ग्रन्था-पञ्चकोलकम् ॥ १९ ॥
स्तन्ये त्रिदोषमलिने दुर्गन्धामं जलोपमम् ।
विबद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते ॥ २० ॥
शकृन्नानाव्यथावर्णं मूत्रं पीतं सितं घनम् ।
ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिकाः ॥ २१ ॥

---

* मूर्व्वा इति वा पाठः ।

---

पित्तदुष्टे इति । पित्तदुष्टे गुड़ूच्यादीनि क्काथयित्वा बालः पिबेत् धात्रीच । अथवा त्रिफलादीन् पिबेत् । अथवा सारिवादिगणं पिबेत् ॥ १४—१५ ॥

घृतानीति । अथ सारिवादिगणैः पृथक् पृथक् सिद्धानि घृतानि लिह्यात् । विरेचनद्रव्यञ्च पित्तघ्नं कुर्यात् । अभ्यङ्गादींश्च शीतान् युञ्ज्यात् । श्लेष्मात्मके इति । श्लेष्मदुष्टे स्तन्ये मधुयष्टीसैन्धवयुतं घृतं बालं पाययेत् । सैन्धवपिप्पलीयुक्तं घृतं वा पाययेत् । मदनकुसुमैर्माक्षिकयुतैः स्तनौ लिम्पेत् । बालस्य चोष्ठौ लिम्पेत् । एवं कृते सति बालः सुखं वमेत् । तीक्ष्णै-रिति । धात्रीं तीक्ष्णैर्वमनैर्वामयेत् । अनन्तरं कृते संसर्गे सति मुस्तादिं क्वथितं पिबेत् । तगरादीन् वाऽतिविषादीन् वा पिबेत् ॥ १६—१९ ॥

स्तन्यइति । त्रिदोषदुष्टे स्तन्ये दुर्गन्धादिगुणं शकृदुपवेश्यते, तथा नानाव्यथा-वर्णं । मूत्रं च पीतं सितं घनं स्त्यानञ्च स्यात् । तथा ज्वरादयोऽन्येऽप्येवंप्रकारा

अङ्गभङ्गोऽङ्गविक्षेपः कूजनं वपथुर्भ्रमः ।
घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् ।
क्षीरालसकमित्याहुरत्ययं चातिदारुणम् ॥ २२ ॥
तत्राशु धात्रीं बालं च वमनेनोपपादयेत् ॥ २३ ॥
विहितायाञ्च संसर्ग्यां वचादिं योजयेद्गणम् ।
निशादिं वाथवा माद्रीपाठातिक्ताघनामयान् ॥ २४ ॥
पाठाशुण्ठ्यमृतातिक्ततिक्तादेवाह्वसारिवाः ।
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम् ॥ २५ ॥
अनुबन्धे यथाव्याधि प्रतिकुर्वीत कालवित् ॥ २६ ॥
दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् ।
विशेषाज्ज्वर-विड्भेद-कास-च्छर्दि-शिरोरुजाम् ।
अतिस्यन्दस्य * पोथक्या विसर्पस्य च जायते ॥ २७ ।
पृष्ठभङ्गे विडालानां बर्हिणाञ्च शिखोद्गमे ।
दन्तोद्भवे च बालानां नहि किञ्चिन्न दूयते ॥ २८ ॥
यथादोषं यथारोगं यथोद्रेकं यथाशयम् । †
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥ २९ ॥

* अभिष्यन्दस्य इति वा पाठः । † यथावय इति वा पाठः ।

रोगा जायन्ते । तमीदृशं गदं चीरालसकमिति कथयन्ति । अत्ययं विनाशहेतुम् । अतएवातिदारुणं ॥ २०—२२ ॥

तत्रेति । तत्र चीरालसके शीघ्रमेव धात्रीं बालञ्च वमनेनोपक्रमेत् ॥ २३ ॥

विहितायामिति । संसर्ग्यां पेयादिके क्रमे कृते वचादिं निशादिं वा गणं प्रयोजयेत् । माद्र्यादीन् वा योजयेत् ॥ २४ ॥

पाठेति । पाठादय उपयुक्ताः परं स्तन्यदोषहराः । तिक्तः किराततिक्तः ॥२५॥

अनुबन्धइति । अनुबन्धे सति यथारोगं चिकित्सितं कुर्याद्वैद्यः ॥ २६ ॥

दन्तोद्भेदइति । रोगाणां च सर्वेषामपि दन्तोद्भेदो हेतुर्जायते । विशेषेण ज्वरादीनां हेतुः सम्पद्यते ॥ २७ ॥

पृष्ठभङ्गे इति । मार्जाराणां पृष्ठभङ्गे सति मयूराणां शिखोद्गमे सति, दन्तोत्थाने शिशूनां न किञ्चिन्न दूयते, अपि तु सर्वाण्यङ्गानि पीड्यन्त इत्यर्थः ॥ २८ ॥

यथादोषमिति । तत्र दोषानुसारेण तथा दोषाधिक्यानुरोधेन तथा आशयानुरोधेन रोगानुसारेण तद्देशकालसत्त्वसात्म्यप्रकृतीर्निरूप्य चौषधं प्रयोजयेत् ॥ २९ ॥

नित्यञ्च शुक्रेषु श्रुतं यथास्वं पाने च मर्श्ये च घृतं विदध्यात् ।
न हीयते लब्धबला तथान्तस्तीक्ष्णाञ्जनैर्दृक् सततं प्रयुक्तैः ॥ ४२ ॥

इत्यष्टाङ्गहृदये शालाक्यतन्त्रे सन्धिसितासितरोगप्रतिषेधो
नाम एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

---

अथातो दृष्टिरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥ १ ॥

सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ २ ॥
प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।
भूतन्तु यत्नादासन्नं दूरे सूक्ष्मञ्च नेक्षते ॥

---

विदध्यात् । किमित्याह ? तथा घृतपानेन सेचनेन लब्धबला [illegible]गन्तःप्रान्ततः प्रयुक्तै-स्तीक्ष्णाञ्जनैर्न हीयते हानिं न यायादिति । उपजातिवृत्तम् ॥ ४१—४२ ॥

इति श्रीमद्गाङ्गदत्तपुत्र-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने सन्धिसितासितरोगप्रतिषेधो
नामैकादशोऽध्यायः ॥ ११ ॥

---

अस्मादनन्तरं दृष्टिरोगविज्ञानमाह । तत्रापि पूर्वं तिमिरं लिलक्षयिषुराह,—अथात इति । सिरेति । दोषे वाताद्यन्यतमे सिरानुसारिणि तथा प्रथमं बाह्यं पटलं श्रिते सत्यव्यक्तं रूपं पश्यति । व्यक्तमपि कदाचिन्निमित्तमन्तरेण पश्यति । एष तिमिराख्यो रोग इति वक्ष्यमाणेन सम्बन्धः ॥ १—२ ॥

प्राप्त इति । द्वितीयं पटलं प्राप्तेऽभूतमपि पश्यति । न केवलं भूतम् । भूतन्तु यत्नेन पश्यति । तत्रासन्नमेव दूरे न च सूक्ष्मं पश्यति । दूरान्तिकस्थञ्च रूपं वैपरीत्येन [illegible]ते । दूरस्थं निकटस्थं निकटस्थं दूरस्थमित्यर्थः । दोषे मण्डलसंस्थाने द्वितीय-

दूरान्तिकस्थं रूपञ्च विपर्य्यासेन मन्यते।
दोषे मण्डलसंस्थाने मण्डलानीव पश्यति॥
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते।
दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्य्ययम्॥
नान्तिकस्थमधःसंस्थे दूरगं नोपरि स्थिते।
पार्श्वं पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः॥ ३॥
प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते।
तेनोर्द्ध्वं मीक्षते नाधस्तनुचेलावृतोपमम्।
यथावर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात्॥ ४॥
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः।
लिङ्गनाशं मलः कुर्व्वन् छादयेद्दृष्टिमण्डलम्॥ ५॥
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति।
चलाविलारुणाभासं प्रसन्नञ्चेक्षते मुहुः॥
जालानि केशान्मशकान् रश्मींश्चोपेक्षितेऽत्र च।
काचीभूते दृगरुणा पश्यत्यास्यमनासिकम्॥

---

पटलाश्रिते एव मण्डलानीवालोकते। दृष्टिमध्यस्थे दोषे एकमेव वस्तु द्विप्रकारं पश्यति। बहुधा स्थिते दोषे एकमेव वस्तु बहुप्रकारं पश्यति। दृष्टेरभ्यन्तराश्रिते दोषे ह्रस्वं वृद्धञ्च तयोर्व्विपर्य्ययः। ह्रस्वञ्च महान्तं महान्तञ्च ह्रस्वमिति वैपरीत्येन पश्यति। अधः स्थिते दोषे समीपस्थं पदार्थं नेक्षते। उपरिष्टात् स्थिते दोषे दूरगं न पश्यति। पार्श्वस्थे दोषे पार्श्वे रूपं न पश्येत्। अयं सर्व्वस्तिमिरसंज्ञो रोगः॥ ३॥

प्राप्नोतीति। तृतीयं पटलं स्थिते दोषे काचत्वं प्राप्नोति। तेन काचेनोर्द्ध्वमीक्षते न त्वधः। तच्च तनुवस्त्रच्छन्नसदृशं, दृष्टिश्चात्र दोषानुसारेण रज्यते। यथा वातेन श्यावेत्यादिक्रमेण च दृष्टिर्हीयते। तथेति। एवमप्युपेक्षमाणस्याचिकित्सितस्य तृतीयं पटलं मुक्त्वा चतुर्थपटलं गतो मलो दोषो लिङ्गनाशं दृष्टिनाशं कुर्व्वन् दृष्टिमण्डलं छादयेत्॥ ४—५॥

इति सामान्यलक्षणमुक्त्वा विशेषमाह,—तत्रेति। तत्र तिमिरेषु मध्ये पवनतिमिरे सति व्याविद्धमिव पश्यति। तथा चलञ्च धूमाविलमरुणाभासं पुनः प्रसन्नञ्चावलोकते।

चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ।
वृद्ध: काचो दृशं कुर्य्याद् रजोधूमावृतामिव ॥
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हृतदर्शनाम् ।
सलिङ्गनाशो वाते तु सङ्कोचयति दृक् शिरा: ।
दृङ्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता ॥ ६ ॥
पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम् ।
शिखितित्तिरिपिच्छाभं प्रायो नीलञ्च पश्यति ॥
काचे दृक् काचनीलाभा तादृगेव च पश्यति ।
अर्केन्दु-परिवेषाग्नि-मरीचीन्द्रधनूंषि च ॥
भृङ्गनीला निरालोका दृक् स्निग्धा लिङ्गनाशत: ।
दृष्टि: पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी ।
भवेत् पित्तविदग्धाख्या पीता पीताभदर्शना ॥ ७ ॥
कफेन तिमिरे प्राय: स्निग्धं श्वेतञ्च पश्यति ।
शङ्खेन्दु-कुन्द-कुसुमै: कुमुदैरिव चाचितम् ॥

---

प्रकृतिस्थनयनेन पश्यति पवनस्य चलरूपत्वात् । तथा जालादीनि मुहु: पश्यति । आस्यं मुखमनासिकं नासिकारहितं पश्यति । तथा चन्द्रदीपादीनामनेकत्वं वक्रमवक्रमिव मन्यते । वृद्ध: काचोरजोधूमावृतामिव दृष्टिञ्च कुर्य्यात् । तथास्पष्टाऽरुणाऽऽभा यस्यास्तां तथापि विस्तीर्णां सूक्ष्माञ्च तथा हृतदर्शनां । स एवम्भूतो लिङ्गनाश: । इति वातजास्तिमिरलिङ्गनाशा उक्ता: । अधुना वायुसामान्याद् गम्भीरां दृष्टिं व्याचष्टे,—वात इति । वाते तु दृक् शिरा: सङ्कोचयति । दृष्टिमण्डलमन्त: प्रविशति । सा गम्भीरा दृष्टि: स्मृता मुनिभिरिति शेष: ॥ ६ ॥

पित्तज इति । पित्तोद्भवे तिमिरे विद्युदादिदीपितम् । तथा मयूरतित्तिरिप्रभाभं प्रायेण नीलञ्च पश्यति । काचे काचनीलसदृशी दृष्टि: स्यात् । तादृगेव काचनीलाभा संपश्यति । तथाऽर्केन्दुपरिवेषादीन् पश्यति । लिङ्गनाशाद् दृष्टिश्च भ्रमरनीला निरालोका स्निग्धा च स्यात् । तेन ह्रस्वसंज्ञा दृष्टि: स्यात् । सा च ह्रस्वसंस्थाना तथा ह्रस्वदर्शिनी अल्पदर्शिनी पित्तविदग्धसंज्ञा दृष्टि: पीतवर्णा स्यात् । तथा पीताभं दर्शनं यस्या: सा पीताभदर्शना ॥ ७ ॥

कफेनेति । कफेन तिमिरे सति प्राय: स्निग्धं शुक्लञ्चालोकते । तथा शङ्खादिभिरिवाचित पश्यति । काचे तु निम्बु(?)भंऽर्कादिभिरिवाचितं पश्यति । दृक् शुक्लाभा

काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम्।
सिताभा सा च दृष्टिः स्याल्लिङ्गनाशे तु लक्ष्यते॥
मूर्त्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः।
बिन्दुर्जलस्येव चलः पद्मिनीपुटसंस्थितः॥
उष्णे सङ्कोचमायाति छायायां परिसर्पति।
शङ्ख-कुन्देन्दु-कुमुद-स्फटिकोपमशुक्लिमा॥ ८॥
रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति।
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति॥
लिङ्गनाशेऽपि तादृग् दृङ् निष्प्रभा हतदर्शना॥ ९॥
संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणम्।
तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणम्।
तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते॥ १०॥
द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः।
नकुलान्धः स तत्राक्षि चित्रं पश्यति नो निशि॥ ११॥
अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः।
स्थगयन्ति दृशं दोषा दोषान्धः सगदोऽपरः॥

---

स्याल्लिङ्गनाशे तु दृश्यते। मूर्त्तः कफो दृष्टिगतः स्निग्धस्तथा दृष्टिविनाशनश्च। जलस्येव बिन्दुश्चलः पद्मिनीपुटसंस्थितः। आतपे चासौ बिन्दुः सङ्कुचति। छायायां प्रसरति। तथा शङ्खादिशुक्लिमा स्यात्॥ ८॥

रक्तेनेति। रक्तेन तिमिरे सति रक्ताभं तथा तम इव च पश्यति। काचेन रक्ता वा कृष्णा वा दृष्टिः स्यात्। तादृगेव रक्तं कृष्णं वा पश्यति। लिङ्गनाशे च तादृशी काचदृष्टिस्तथा निष्प्रभा हतदर्शना च स्यात्। संसर्गेति। संसर्गसन्निपातेषु सङ्कीर्णलक्षणांस्तिमिरकाचलिङ्गनाशान् विन्द्यात्। तथाऽकस्मान्निमित्तमन्तरेण तैः संसर्गसन्निपातैर्व्यक्तं स्पष्टं कदाचिदाकुलमीक्षणं दर्शनं यस्य स एवम्भूतो नरस्तिमिरे स्यात्। शेषयोः काचलिङ्गनाशयोर्दृष्टौ चित्रो रागः स्यात्॥ ९—१०॥

द्योत्यत इति। यस्यातुरस्य नकुलस्येव दृष्टिर्दोषैर्निचिता द्योत्यते देदीप्यते। स नकुलान्धस्तत्र नकुलान्धे दिवा चित्रं पश्यति न तु निशि रजन्याम्। अर्क इति। अर्केऽस्तपर्वतस्य मस्तके न्यस्ता गभस्तयो येन तस्मिन् सति स्तम्भं प्राप्ता दोषा दृशं छादयन्ति। स एवम्भूतो दोषान्धो नाम रोगी दिवा रूपं पश्यति। इत्यत्र युक्तिमाह,--मला

दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ।
विलीनलीना यच्छन्ति व्यक्तमत्राक्षि दर्शनम् ॥ १२ ॥
उष्णातप्तस्य सहसा शीतवारिनिमज्जनात् ।
त्रिदोषरक्तसंपृक्तो यात्युष्मोर्द्ध्वं ततोऽक्षिणी ॥
दाहोषे मलिनं शुक्लमहन्याविलदर्शनम् ।
रात्रावान्ध्यञ्च जायेत विदग्धोष्णेन सा स्मृता ॥ १३ ॥
भृशमम्लाशनाद्दोषैः सास्रैर्या दृष्टिराचिता ।
सक्लेदकण्डूकलुषा विदग्धाम्लेन सा स्मृता ॥ १४ ॥
शोक-ज्वर-शिरोरोग-सन्तप्तस्यानिलादयः ।
धूमाविलां धूमदर्शां दृशं कुर्य्युः स धूमरः ॥ १५ ॥
सहसैवाल्पसत्त्वस्य पश्यतो रूपमद्भुतम् ।
भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ॥
कुर्व्वन्ति तेजः संशोष्य दृष्टिं मुषितदर्शनाम् ।
वैदूर्य्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम् ॥
औपसर्गिक इत्येष लिङ्गनाशोऽत्र वर्ज्जयेत् ।
विना कफाल्लिङ्गनाशान् गम्भीरां ह्रस्वजामपि ॥

---

अक्षि दिवाकररश्मिभिः स्पृष्टास्तथा दृष्टिपथाद्भ्रष्टा विलीनाः सन्तोऽत्र रात्रन्धे स्पष्टं दर्शनं ददति। दिवाकरकरस्पृष्टा इति हेतौ प्रथमा ॥ ११—१२ ॥

उष्णातप्तस्येति । उष्णेन तप्तस्य सहसा झटित्येव शिशिरजलनिमज्जनात् त्रिदोषरक्तसंपृक्त उष्णोर्द्ध्वमक्षि याति । तत उष्मण ऊर्द्ध्वगमनादक्षिण दाहोषे भवतः, शुक्लभागश्च मलिनो भवति । अहनि दिने आविलं दर्शनं जायते । रात्रौ चान्ध्यम् । सा दृष्टिरुष्णविदग्धाख्या । भृशमिति । अत्यन्तमम्लाशनादम्लभक्षणाद्दोषैः सरक्तैर्या दृष्टिराचिता क्लेदकण्डूकलुषान्विता स्यात्, सा विदग्धाम्लेन दृष्टिः स्मृता ॥ १३—१४ ॥

शोकेति । शोकादिसन्तप्तस्य नरस्य वातादयो धूमेनेवाविलां धूमदर्शनां दृष्टिं कुर्य्युः । स धूमरो नाम रोगः । सहसेति । सहस वातर्कितस्य पुंसोऽल्पसत्त्वस्य रूपमद्भुतं पश्यतो भास्वरं भास्करप्रकारं पश्यतो वा वातादयो लोचनाश्रिता दृष्टिं मुषितदर्शनां वैदूर्य्यवर्णां स्तिमितां प्रकृतिस्थामिव पीड़ारहितां कुर्व्वन्ति । किं कृत्वा ? तेजः संशोष्य । इत्येष औपसर्गिको लिङ्गनाशः । अत्र वर्ज्जयेदिति । अत्रैषु सर्व्वे

षट् काचा नकुलान्धश्च याप्या: शेषांस्तु साधयेत्।
द्वादशेति गदा दृष्टौ निर्दिष्टा: सप्तविंशति: ॥ १६ ॥

इत्यष्टाङ्गहृदये शालाक्यतन्त्रे दृष्टिरोगविज्ञान
नाम द्वादशोऽध्याय: ॥ १२ ॥

---

## त्रयोदशोऽध्याय:।

अथातस्तिमिरप्रतिषेधं व्याख्यास्याम:।
इति ह स्माहुरात्रेयादयो महर्षय: ॥ १ ॥
तिमिरं काचतां याति काचोऽप्यान्ध्यमुपेक्षया।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेद् द्रुतम् ॥ २ ॥

---

कफाद्विना लिङ्गनाशान् वातपित्तसंसर्गसन्निपातरक्तजौपसर्गिकान् षड् वर्ज्जयेत्। गम्भीरां रक्तजामपि वर्ज्जयेत्। षड् वातपित्तकफरक्तसंसर्गसन्निपातजा: षट् काचा नकुलान्ध: सप्तम एते याप्या:। शेषांस्तु द्वादश साधयेत्। सव वातपित्तकफरक्तसंसर्ग-सन्निपातै: पृथक् तिमिराणीति षट्। सप्तम: कफेन च लिङ्गनाश:। अष्टम: पित्तविदग्धा दृष्टि:। नवमो दोषान्ध:। दशम उष्णविदग्धा। एकादशी विदग्धाम्ला। द्वादशो धूमर:। इत्येवं दृष्टिमण्डले रोगा: सप्तविंशतिसंख्या: कथिता: ॥ १५—१६ ॥

इति श्रीमृगाङ्कदत्तसुत-श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां
सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने दृष्टिरोगविज्ञानं नाम
द्वादशोऽध्याय: ॥ १२ ॥

---

अस्मादनन्तरं तिमिरप्रतिषेध उच्यते अथात इति। ननु दृष्टिरोगविज्ञाना-दनन्तरं दृष्टिरोगप्रतिषेधो ज्ञाप्य:। उपपन्नमाह भवान्। किन्तु दृष्टिरोगचिकित्सितस्य बहुवक्तव्यत्वात् पृथगध्यायो वक्तुं युक्त:। तत्रापि क्रमप्राप्तस्तिमिरप्रतिषेध इति तिमिरप्रतिषेधारम्भ एव युक्त:। काचादीनान्तु स्ववक्तव्यत्वादत्रैवाभिधानम्। ततो बहुवक्तव्यत्वात् पृथगध्यायो लिङ्गनाशस्येति सर्व्वं युक्तम् ॥ १ ॥

तिमिरमिति। तिमिरमुपेक्षया काचत्वं याति काचोऽप्युपेक्षित आन्ध्यं गच्छति। अत: कारणान्नेत्ररोगेषु मध्ये तिमिरं दारुणं शीघ्रं साधयेत्। तुल्यामिति। जीवन्त्या:

तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते ।
तत् क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥
प्रपौण्डरीक-काकोली-पिप्पली-लोध्र-सैन्धवैः ।
शताह्वा-मधुक-द्राक्षा-सिता-दारु-फलत्रयैः ॥
कार्षिकैर्निशि तत पीतं तिमिरापहरं परम् ।
द्राक्षा-चन्दन-मञ्जिष्ठा-काकोलीद्वय-जीवकैः ॥
सिता-शतावरी-मेदा-पुण्ड्राह्व-मधुकोत्पलैः ।
पचेज्जीर्णं घृतप्रस्थं समक्षीरं पिचून्मितैः ।
हन्ति तत्काच-तिमिर-रक्तराजी-शिरोरुजः ॥ ३ ॥
पटोल-निम्ब-कटुका-दार्व्वी-सेव्य-वरा-वृषम् ।
सधन्वयास-त्रायन्ती-पर्पटं पालिकं पृथक् ॥
प्रस्थमामलकानाञ्च क्वाथयेल्लल्वणेऽम्भसि ।
तदाढ़केऽर्द्धपलिकैः पिष्टैः प्रस्थं घृतात् पचेत् ॥
मुस्त-भूनिम्ब-यष्ट्याह्व-कुटजोदीच्य-चन्दनैः ।
सपिप्पलीकैस्तत् सर्पिर्घ्राणकर्णास्यरोगजित् ॥
विद्रधिज्वर-दुष्टारुर्व्विसर्पापचि-कुष्ठनुत् ।
विशेषाच्छुक्र-तिमिर-नक्तान्ध्योष्णाम्लदाहनुत् ॥ ४ ॥
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढ़के ।
तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ॥

---

पलशतमपां द्रोणे पादावशेषितं पचेत् । तत्क्वाथे घृतप्रस्थं द्विगुणक्षीरं प्रपौण्डरीकादिभिः कर्षपरिमाणैः कल्कितैर्व्विपाचयेत् । निशि पीतं तत्परं तिमिरापहम् । तथा द्राक्षादिभिः पिचुन्मितैः कर्षांशैर्जीर्णस्य पुराणघृतस्य प्रस्थं समक्षीरं पचेत् । तच्च काचादीन् हन्ति ॥ २—३ ॥

पटोलेति । पटोलादिकं पर्पटान्तं पृथक्, पलोन्मितमामलकानां प्रस्थं लल्वण द्रोणेऽम्भसि क्वाथयेत् । तदाढ़के मुस्ताभिः सपिप्पलीकैः पिष्टैः कल्कितैरर्द्धपलिकैर्घृतं तत्प्रस्थं विपाचयेत् । तच्च घृतं घ्राणादिरोगजित् । विद्रध्यादिरोगजित् । विशेषेण शुक्रादिघ्नम् । एतत्पटोलाद्यं घृतम् । त्रिफलेति । त्रिफलायाः पलाष्टकं जलाढ़के

अर्द्धप्रस्थो घृतात् सिद्धः सितया माक्षिकेण वा।
युक्तं पिबत्तत्तिमिरी तद्युक्तं वा वरारसम्॥ ५॥
यष्टीमधु-द्विकाकोली-व्याघ्री-कृष्णामृतोत्पलैः॥
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः॥
अजाक्षी -वरा-वासा-मार्कवस्वरसैः पृथक्।
महात्रैफलमित्येतत् परं दृष्टिविकारजित्॥ ६॥
त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि।
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम्।
मासमेकं हिताहारः पिबन्नामलकोदकम्।
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः॥ ७॥
ताप्यायोहेम-यष्ट्याह्व-सिता-जीर्णाज्य-माक्षिकः।
संयोजिता यथाकामं तिमिरघ्नी वरा वरा॥ ८॥
सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी।
अपूप-सूप-सक्तून् वा त्रिफलाचूर्णसंयुतान्॥ ९॥
पायसं वा वरायुक्तं शीतं समधुशर्करम्।
प्रातर्भक्तस्य वा पूर्वमद्यात् पथ्यां पृथक् पृथक्।
मृद्वीकां शर्कराक्षौद्रैः सततं तिमिरातुरः॥ १०॥

---

पादशेषं क्वाथ्यम्। तेन क्वाथेन तुल्यचौरेण त्रिफलापलकल्कयुक्तो घृतार्द्धप्रस्थः पक्वः, शर्करया माक्षिकेण वा युतं तत्तिमिरी पिबेत्। घृतेन वा तद्युक्तं त्रिफलाक्वाथं दोषदूष्यादिवशात् पिबेत्। एतच्च त्रिफलाघृतमुच्यते॥ ४—५॥

यष्टीति। यष्ट्यादिभिः पालिकैः सह सिताद्राक्षैरजाक्षीरादिभिः पृथक् स्वरसैः समैः प्रस्थप्रमाणैः सर्पिःप्रस्थं विपाचयेत्। एतन्महात्रैफलं सुष्ठु दृष्टिविकारजित्। त्रैफलेनेति। त्रैफलेन च सर्पिषा त्रिफलां यष्टीयुक्तां माक्षिकेण च परिप्लुतां रात्रौ लिहानो मासमेकं हिताशी सन्नामलकोदकं पिबन् गारुत्मतं चक्षुर्लभत इति भगवान्निमिराह। ताप्येति। ताप्यादिभिः संयोजिता त्रिफला यथाकामं वरा तिमिरघ्नी स्यात्॥ ६—८॥

सघृतमिति। अथवा त्रिफलाक्वाथं ससर्पिष्कं तिमिररोगहरमभ्यसेत्। अपूपादीन् वा त्रिफलाचूर्णसंयुतान् शीलयेत्। पायसमिति। पायसं त्रिफलायुतं वा शीतं

त्रिफलैकतमद्रव्यत्वचं पानीयकल्किताम् ।
शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः ॥
पृथक् शेषौषधरसैः पृथगेव च भाविता ।
सा मषी शोषिता पेष्या भूयो द्विलवणान्विता ।
त्रीण्येतान्यञ्जनान्याह लेखनानि परं निमिः ॥ १८ ॥
सिराजाले सिरायास्तु कठिनालेखनौषधैः ।
न सिध्यन्त्यम्र्मवत्तासां पिटिकानाञ्च साधनम् ॥ १९ ॥
दोषानुरोधाच्छुक्रेषु स्निग्धरूक्षं वराघृतम् ।
तिक्तमूर्द्ध्वं मस्तकस्रावो रेकसेकादि चेष्यते ॥ २० ॥
त्रिस्त्रिवृद्वारिणा पक्वं चतशुक्रे घृतं पिबेत् ।
शिरयाऽनु हरेद्रक्तं जलौकोभिश्च लोचनात् ॥
सिद्धेनोत्पल-काकोली-द्राक्षा-यष्टि-विदारिभिः ।
ससितेनाजपयसा सेचनं सलिलेन वा ।
रागाश्रुवेदनाशान्तौ परं लेखनमञ्जनम् ॥ २१ ॥
वर्त्तयो जातिमुकुल-लाक्षा-गैरिक-चन्दनैः ।
प्रसादयन्ति पित्तास्रं घ्नन्ति च चतशुक्रकम् ॥ २२ ॥
दन्तैर्दन्ति-वराहोष्ट्र-गवाश्वाज-खरोद्भवैः ।
सशङ्ख-मौक्तिकाम्भोधिफेनैर्म्मरिचपादिकैः ।

---

त्रिफलेति । त्रिफलायामेकतमस्य हरीतक्यादेर्द्रव्यस्य त्वचं पानीयकल्कितां शराव-पिहितां कपाले दग्ध्वा चूर्णयेत् । तत एव त्रिफलायाः पृथक् शेषौषधरसैः पृथगेव चैकैकं भाविता सा मषी शोषिता पुनः पेष्या । लवणद्वययुता त्रीण्येतान्यञ्जनानि परं लेखनानि तिमिरघ्नानि निमिर्वक्ति । शिराजाल इति । सिराजाले याः सिराः कठिना लेखनौषधैर्न सिध्यन्ति तासामर्म्मवच्चिकित्सा ; पिटिकानाञ्च । दोषेति । शुक्रेषु दोषवशात् कदाचिद्रुक्षा कदाचित् स्निग्धा त्रिफला हिता । तथा घृतं तिक्तं ऊर्द्ध्वं मस्तकस्रावो रेकसेकादि चेष्यते ॥ १८—२० ॥

त्रिस्त्रिवृदिति । त्रिवृत्क्वाथेन त्रीन् वारान् घृतं पक्वं चतशुक्रे पिबेत् । पश्चाच्छिरया नयनाद्वा जलौकोभिर्वा तथाऽऽजदुग्धेनोत्पलादिभिः सिद्धेन सशर्करेण सेचनं

क्षतशुक्रमपि व्यापि दन्तिवर्त्तिर्निवर्त्तयेत् ॥ २३ ॥
तमालपत्रं गोदन्त-शङ्ख-फेनोऽस्थि गार्दभम् ।
ताम्रञ्च वर्त्तिर्मूत्रेण सर्व्व-शुक्रक-नाशिनी ॥ २४ ॥
रत्नानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटिः ।
करञ्जबीजं लशुनो व्रणसादि च भेषजम् ।
सव्रणाव्रणगम्भीरत्वक्स्थ-शुक्रघ्नमञ्जनम् ॥ २५ ॥
निम्नमुन्नमयेत् स्नेह-पान-नस्य-रसाञ्जनैः ।
सरुजं नीरुजं त्वग्निपुटपाकेन शुक्रकम् ॥ २६ ॥
शुद्धशुक्रे निशायष्टीसारिवाशाबराम्भसा ।
सेचनं रोध्रपोटल्या कोष्णाम्भोमग्नयाऽथवा ॥ २७ ॥
बृहतीमूल-यष्ट्याह्व-ताम्र-सैन्धव-नागरैः ।
धात्रीफलाम्बुना पिष्टैर्लेपितं ताम्रभाजनम् ॥
यवाज्यामलकीपत्रैर्बहुशो धपयेत्ततः ।
तत्र कुर्व्वीत गुटिकास्ता जलक्षौद्रपेषिताः ।
महानीला इति ख्याताः शुद्धशुक्रहराः परम् ॥ २८ ॥

---

हितम् । अथवोत्पलादिक्वथितेन जलेन सेचयेत् । रागाश्रुवेदनाशान्तौ सत्यां लेखनमञ्जनं हितम् । वर्त्तय इति । जातिमुकुलादिभिर्व्वर्त्तयः पित्तास्रं प्रसादयन्ति । क्षतशुक्रञ्च घ्नन्ति । दन्तैरिति । गजाद्युद्भवैर्द्दन्तैः शङ्खमुक्ताफेनयुतैश्चतुर्थांशकमरिचैः क्षतशुक्रमपि व्यापि दन्तवर्त्तिर्निवर्त्तयेत् । अपिशब्दात्क्षुद्रशुक्रकमिति । तमालपत्रमिति । तमालपत्रादिभिर्व्वर्त्तिर्गोमूत्रेण सर्व्वशुक्रहृत् ॥ २१—२४ ॥

रत्नानीति । रत्नानि मौक्तिकादीनि, दन्ता गजादीनाम्, शृङ्गाणि छागादीनाम्, धातवो गैरिकाद्याः । त्र्यूषणादीनि । तथा व्रणसादि भेषजं स्वर्णक्षीर्य्यादि । एतदञ्जनं सव्रणाव्रणगम्भीरत्वक्स्थशुक्रहरम् । निम्नमिति । निम्नं शुक्रकं स्नेहपानादिभिरुन्नमयेत् । सरुजं नीरुजञ्च तर्पणपुटपाकेनोन्नमयेत् । शुद्धशुक्र इति । शुद्धशुक्रे हरिद्रादिक्वाथेन सेचनं हितम् । अथवा रोध्रपोटल्या कोष्णाम्बुमग्नया । बृहतीति । बृहतीचूर्णादिभिरामलकजलेन पिष्टैस्ताम्रभाजनं लेपितं यवादिभिर्धूपयेत् । अनन्तरं तत्र गुटिकास्तोयमाक्षिकपिष्टाः कुर्य्यात् । एताश्च महानीला इति प्रथिताः परं शुक्रघ्नाः ॥ २५—२८ ॥

स्थिरे शुक्रे घने चाऽस्य बहुशोऽपहरेदसृक्।
शिर:कायविरेकांश्च पुटपाकांश्च भूरिश: ॥ २९ ॥
कुर्य्यान्मरिच-वैदेही-शिरीषफल-सैन्धवै: ।
घर्षणं त्रिफलाक्वाथपीतेन लवणेन वा ॥ ३० ॥
कुर्य्यादञ्जनयोगौ वा श्लोकार्द्धगदिताविमौ ।
शङ्ख-कोलास्थि-कतक-द्राक्षा-मधुक-माक्षिकै: ।
सुरादन्तार्णवमलै: शिरीषकुसुमान्वितै: ॥ ३१ ॥
धात्री-फणिज्झकरसे क्षारो लाङ्गलिकोद्भव: ।
उषित: शोषितश्चूर्ण: शुक्रहर्षणमञ्जनम् ॥ ३२ ॥
मुद्गा वा निस्तुषा: पिष्टा: शङ्ख-क्षौद्र-समायुता: ।
सारो मधूकान्मधुमान् मज्जा वाऽक्षात्समाक्षिका ॥ ३३ ॥
गोखराश्वोष्ट्रदशना: शङ्ख: फेन: समुद्रज: ।
वर्त्तिरर्ज्जुनतोयेन हृष्टशुक्रक-नाशिनी ॥ ३४ ॥
उत्सन्नं वा सशल्यं वा शुक्रं बालादिभिर्लिखेत् ॥ ३५ ॥
शिराशुक्रे त्वदृष्टिघ्ने चिकित्सा व्रणशुक्रवत् ॥ ३६ ॥
पुण्ड्र-यष्ट्याह्व-काकोली-सिंही-लोह-निशाञ्जनम्।
कल्कितं छागदुग्धेन सघृतैर्धूपितं यवै: ।
धात्रीपत्रैश्च पर्य्यायाद्वर्त्तिर्नेत्राञ्जनं परम् ॥ ३७ ॥

---

स्थिर इति। स्थिरे शुक्रे घने चातुरस्यास्य बहुशो रक्तं मोचयेत्। शिरोविरेकादीन् पुटपाकांश्च पुन: पुन: कुर्य्यात्। कुर्य्यादिति। मरिचादिभिर्घर्षणं कुर्य्यात्। त्रिफलाक्वाथपीतेन सैन्धवेन वा। कुर्य्यादिति। इमौ श्लोकार्द्धोक्तौ योगौ घर्षणाय कुर्य्यात्। शङ्खादिभिर्म्माक्षिकान्तैरेको योग: सुरादिकुसुमान्तैरन्य:। धात्रीति। धात्र्यादिरसे क्षारो लाङ्गलिकज उषित: शोषितश्चूर्ण: शुक्रहर्षणमञ्जनम्। मुद्गेति। शङ्खमधुयुता मुद्गा निस्तुषा: पिष्टा अञ्जनम्। मधूकात् सारो मधुयुतोऽञ्जनम्। अथवा बिभीतकान्मज्जा वा माक्षिकान्विता ॥ २९—३३ ॥

गोखरेति। गवादिदन्ता: शङ्ख: समुद्रफेन: पाथजलेन पिष्टा वर्त्तिर्हृष्टशुक्रहरा। उत्सन्नमिति। उत्सन्नं वा सशल्यं शुक्रं वा बालशाकपत्रादिभिर्लिखेत्। शिराशुक्र इति। शिराशुक्रे पुनरदृष्टिघ्ने चिकित्सा व्रणशुक्र इव कार्य्या। पुण्ड्रेति। पुण्ड्रादिकं

अशान्तावर्म्मवच्छस्त्रमजकाख्ये च योजयेत् ॥ ३८ ॥
अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे: ।
वेदनोपशमं स्नेहपानास्रक्स्रवणादिभि: ।
कुर्य्याद्बीभत्सतां जेतुं शुक्रस्योत्सेधसाधनम् ॥ ३९ ॥
नारिकेलास्थि-भल्लात-ताल-वंशकरीरजम् ।
भस्माद्भि: स्रावयेत्ताभिर्भावयेत् करभास्थिजम् ॥
चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमञ्जनम् ।
साध्येषु साधनायालमिदमेव च शीलितम् ॥ ४० ॥
अजकां पार्श्वतोविद्ध्वा सूच्या विस्राव्य चोदकम् ।
समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानुपूरयेत् ॥
व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ।
सप्तरात्राद् व्रणे रूढ़े कृष्णभागे समे स्थिरे ॥
स्नेहाञ्जनञ्च कर्त्तव्यं नस्यञ्च चीरसर्पिषा ।
तथापि पुनराध्माने भेदच्छेदादिकां क्रियाम् ।
युक्त्या कुर्य्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ॥ ४१ ॥

---

छागदुग्धेन पिष्टं सप्तपिप्पलीयवैरामलकपत्रैश्च पर्य्यायेण धूपिता वर्त्तिर्नेत्राञ्जनं परम् । अशान्ताविति । अशान्तौ सत्यामर्म्मवदजकाख्ये च शस्त्रं प्रयोजयेत् । अजकायामिति । असाध्यायामजकायां शुक्रे चान्यत्र रोगे तत् प्रकारेऽसाध्ये वेदनोपशमं स्नेहपानादिभिर्विदधीत । बीभत्सतां निन्द्यतां जेतुं शुक्रस्योत्सेधसाधनं कुर्य्यात् । नारिकेलेति । नारिकेलास्थ्यादिजं भस्माद्भि: स्रावयेत् । ताभिरद्भि: करभास्थिजं चूर्णं भावयेत् । तच्चूर्णमञ्जनमसाध्येषु शुक्रेषु वैवर्ण्यहरम् । शीलितं चेत्तदेव शुक्राणां साधनायालं श्रेष्ठम् ॥ ३४—४० ॥

अजकामिति । अजकां पार्श्वत: सूच्या विद्ध्वा जलञ्च विस्राव्यानन्तरमङ्गुष्ठेन समं वसया द्रवीकृत्य व्रणं गोमांसचूर्णेन पूरयेत् । बद्धं बद्धं विमुच्य च । सप्तरात्राद् व्रणे रूढ़े सति तथा कृष्णभागे समे स्थिरे सति स्नेहाञ्जनञ्च कर्त्तव्यम् । चीरघृते च नस्यम् एवमपि कृते पुनराध्माने सति भेदच्छेदादिकां क्रियां युक्त्या कुर्य्यात् । यथाऽतिच्छेदे दृष्टेनिमज्जनं न स्यात् । नित्यमिति । शुक्रेषु च नित्यं घृतं यथायोगं पक्वं पाने

स्रोतोजांशांश्चतुःषष्टिं ताम्रायोरूप्य-काञ्चनैः ।
युक्तान् प्रत्येकमेकांशैरन्धमूषोदरस्थितान् ॥
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ।
रसस्कन्धकषायेषु सप्तकृत्वः पृथक् पृथक् ॥
वैदूर्य्य-मुक्ता-शङ्खानां त्रिभिर्भागैर्युतं ततः ।
चूर्णाञ्जनं प्रयुञ्जीत तत् सर्व्वं तिमिरापहम् ॥ ११ ॥

मांसी-त्रिजात-कायःकुङ्कुम-नीलोत्पलाभया-तुत्थैः ।
सित-काच-शङ्ख-फेनक-मरिचाञ्जन-पिप्पली-मधुकैः ॥
चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्गगुलमक्ष्णोः ।
तिमिरार्म्म-रक्तराजी-कण्डूकाचादिशममिच्छन् ॥ १२ ॥
मरिच-वरलवण-भागौ भागौ द्वौ कण-समुद्रफेनाभ्याम् ।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् * ॥ १३ ॥

द्राक्षा-मृणालीस्वरसे क्षीर-मद्य-वसासु च ।
पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् ॥
तच्चूर्णितं स्थितं शङ्खे दृक्प्रसादनमञ्जनम् ।
शस्तं सर्व्वाक्षिरोगेषु विदेहपतिनिर्म्मितम् ॥ १४ ॥

---

* मनोह्वा तुल्यकस्तूरीमांसीमायसरीचनम् ।
दश कर्पूरसंयुक्तमशीतिगुणमञ्जनम् ॥ इत्यधिकः पाठः ।

---

समधुशर्करं प्रातरद्यात् । भक्तस्य पूर्व्व वा हरीतकीं वा मृद्वीकां शर्कराक्षौद्रैः पृथक् पृथक् युतामनारतं तिमिरातुरोऽद्यात् । स्रोत इति । स्रोतोजाच्च चतुःषष्टिमंशांस्ताम्रादिभिः प्रत्येकमेकांशैर्युतानन्धमूषोदरस्थितान् ध्मापयित्वा सम्यगावर्त्तितं शिलायां ततोऽनन्तरं मधुरादिगणक्वाथेषु तं निषेचयेत्, पृथक् सप्त वारान्; ततो वैदूर्य्यमुक्तानां शङ्खानां त्रिभिर्भागैर्युतमेतच्चूर्णाञ्जनं सर्व्वं तिमिरघ्नं प्रयुञ्जीत ॥ ९—११ ॥

मांसीति । मांस्यादिभिः सूक्ष्मरजीकृतैश्चन्द्रेऽश्विनीयुक्ते सत्यक्षियुग्ममञ्जयेत् तिमिरादिशान्तिमिच्छन् । आर्य्ये सुखचपले । मरिचेति । मरिचसैन्धवयोर्द्वौ भागौ पिप्पलीसमुद्रफेनयोर्द्वौ भागौ सौवीराञ्जनस्य भागा नव एतच्चित्रायां चूर्णितं कफामयजित् । गीतिरार्य्या । द्राक्षेति । द्राक्षादिस्वरसेषु पृथक् पृथक् दिव्ये जले स्रोतोऽञ्जनं सप्तकृत्वो निषेचयेत् । तच्चूर्णीकृतं शङ्खे स्थितं दृष्टिप्रसादकृत् अञ्जनं सर्व्वाक्षिरोगेषु श्रेष्ठं विदेहपतिनिर्म्मितम् ॥ १२—१४ ॥

निर्द्दग्धं बादराङ्गारैस्तुत्थञ्चेत्थं निषेचितम्।
क्रमादजापयः-सर्पिःक्षौद्रे तस्मात् पलद्वयम्॥
कार्षिकैस्ताप्य-मरिच-स्रोतोज-कटुका-नतैः।
पटु-लोध्र-शिला-पथ्या-कणैलाञ्जन-फेनिकैः॥
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम्।
हन्ति काचार्म्म-नक्तान्ध्य-रक्तराजीः सुशीलितः
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा॥ १५॥
त्रिंशद्भागा भुजङ्गस्य गन्धपाषाणपञ्चकम्।
शुल्व-तालकयोर्द्वौ द्वौ वङ्गस्यैकोऽञ्जनात्त्रयम्॥
अन्धमूषीकृतं ध्मातं पक्वं विमलमञ्जनम्।
तिमिरान्तकरं लोके द्वितीय इव भास्करः॥ १६॥

गोमूत्रे छगलरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्य्याद्गरुड़समं नरस्य चक्षुः॥ १७॥

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः।
यष्टीरसञ्च यत्सीसं सप्तकृत्वः पृथक् पृथक्॥

---

निर्द्दग्धमिति। बादराङ्गारैस्तुत्थं निर्द्दग्धं पूर्व्ववत् क्रमेण छागक्षीरघृतमाक्षिके निषिचितं तस्मान्निर्द्दग्धाच्च तुत्थात् पलद्वयं ताप्यादिभिः कार्षिकैर्यष्टीपलेन च युक्तं मूषान्तर्ध्मापितं चूर्णितं काचादीन् हन्ति। सुसेवितोऽयं भास्करश्चूर्णो विशेषेण तिमिरं हन्ति। यथा रविरन्धकारमित्युपमाश्लेषोऽलङ्कारः॥ १५॥

त्रिंशद्भागा इति। भुजङ्गस्य सीसकस्य त्रिंशद्भागा गन्धपाषाणस्य भागपञ्चकं शुल्व-तालकयोर्द्वौ द्वौ भागौ वङ्गस्य त्रपुष एको भागः। अञ्जनाद्भागत्रयमन्धमूषाध्मातं विपक्वमञ्जनम् द्वितीयो भास्करइव लोके तिमिरान्तकरम्। भुजङ्गादीनां शोधितानामत्र प्रयोगः। नतु मारितानाम्। गोमूत्र इति। तत्तुत्थं नरस्य गरुड़तुल्यं नयनं कुर्य्यात्। कतमम्? यद्दीप्तं सत् गोमूत्रादिष्वनेकशः सप्तकृत्वो निषिक्तम्। प्रहर्षिणी। श्रेष्ठाजलमिति। यत्सीसं तप्तं तप्तं त्रिफलायाः क्वाथादिकं पृथक् पृथक् सप्तकृत्वः

संसृष्टे कफ-पित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥ ५० ॥
कारयेद्रक्तसंसृष्टे वातशोणितिकीं क्रियाम् ॥ ५१ ॥
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितः ॥ ५२ ॥
प्रमेह-मेदोवातघ्नमाढ्यवाते भिषग्जितम् ॥ ५३ ॥
महास्नेहोऽस्थिमज्जस्थे पूर्व्वोक्तं रेतसावृते ॥ ५४ ॥
अन्नावृते पाचनीयं वमनं दीपनं लघु ॥ ५५ ॥
मूत्रावृते मूत्रलानि स्वेदा उत्तरबस्तयः ॥ ५६ ॥
एरण्डतैलं वर्च्चःस्थे बस्तिस्नेहाश्च भेदिनः ॥ ५७ ॥
कफ-पित्ताविरुद्धं यत् यच्च वातानुलोमनम् ।
सर्व्वस्थानावृते त्वाशु तत्कार्य्यं मातरिश्वनि ॥ ५८ ॥
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम् ।
पाचना बस्तयः प्रायो मधुराः सानुवासनाः ॥
प्रसमीक्ष्य बलाधिक्यं मृदु कायविरेचनम् ।

---

हितम् । पुराणश्च सर्पिः सर्षपजश्च तैलं हितम् । संसृष्टइति । कफपित्ताभ्यां द्वाभ्यां संसृष्टे वात आदावेव पित्तं विनिर्हरेत् । पश्चात् कफं वातयुक्तं जयेत् । कारयेदिति । रक्तसंसृष्टे वाते वातशोणितिकीं क्रियां कारयेत् । स्वेदेति । मांसावृते स्वेदाभ्यङ्गमांसरसाः क्षीरं स्नेहश्च यथायोगमेतद्धितम् । प्रमेहेति । आढ्यवाते मेदसावृते वायौ प्रमेहघ्नं मेदोघ्नं वातघ्नञ्च भिषग्जितमौषधं हितम् । महेति । अस्थिमज्जस्थे वाते महास्नेहो घृतमज्जावसातैलैः सिद्धः, यद्वा नारायणादिर्हितः । रेतसावृते पूर्व्वोक्तवातव्याधौ शुक्रस्थवातोक्तं हितम् ॥ ४९—५४ ॥

अन्नावृत इति । अन्नावृते पाचनीयमौषधं वमनं हितम् । दीपनीयमाग्नेयं यदौषधं लघु च प्रकृत्या तत्सर्व्वं हितम् । मूत्रावृतइति । मूत्रेणावृते वाते मूत्रलानि त्रपुसादीनि स्वेदाश्चोत्तरबस्तयो हिताः । एरण्डतैलमिति । वर्च्चसावृते वाते एरण्डतैलं बस्तयश्च स्नेहाश्च भेदिनो हिताः । कफपित्तेति । सर्व्वस्थानावृते मातरिश्वनि वायावाशु शीघ्रमेव यदौषधं कफपित्तयोरविरुद्धं वातस्य चानुलोमनं तत्कार्य्यम् ॥ ५५—५८ ॥

अनभिष्यन्दीति । तस्मिन् सर्व्वधात्वावृते मातरिश्वनि यदनभिष्यन्दि स्निग्धं स्रोतसां यच्छुद्धिकरं तत् सर्व्वमन्नपानौषधं योज्यम् । पाचनसंज्ञा बस्तयो बाहुल्येन मधुराः सानुवासनाः स्नेहबस्तयश्च हिताः । बलस्याधिक्यं प्रसमीक्ष्य बुद्ध्वा मृदु काय-

रसायनानां सर्व्वेषामुपयोगः प्रशस्यते ॥
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ।
लेह्यो वा भार्ङ्गवस्तद्वदेकादश सितासितः ॥ ५९ ॥
अपाने त्वावृते सर्व्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं कार्य्यं मूत्राशयविशोधनम् ॥ ६० ॥
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ।
प्राणादीनां भिषक् कुर्य्याद्वितर्क्य स्वयमेव तत् ॥ ६१ ॥
उदानं योजयेदूर्द्ध्वमपानञ्चानुलोमयेत् ।
समानं शमयेद्विद्वांस्त्रिधा व्यानञ्च योजयेत् ॥
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ।
स्वं स्वं स्थानं नयेदेवं वृत्तान् वातान् विमार्गगान् ॥ ६२ ॥

---

विरेचनं हितम् सर्व्वेषां रसायनप्रयोगाणामुपयोगः शस्यते । विशेषेणात्यर्थं शिलाजतुनः पयसा सह प्रयोगः प्रशस्यते । तथा शुद्धस्य गुग्गुलोः प्रयोगः । भार्ङ्गवो लेह्यो ब्राह्मरसायनोक्तश्च्यवनप्राशो वा तद्वदेकादश सितासितौ ब्राह्मरसायनोक्तः शस्यते ॥ ५९ ॥

अपानइति । अपाने वायौ येन केनचिदावृते सर्व्व भेषजं दीपनमग्रे ग्राहि संग्रहणं वातस्यानुलोमनं मूत्राशयस्य वस्तेर्विशोधनं तत्सर्व्वं कार्य्यम् । इतीति । इत्यनन्तरोक्तेन प्रकारेणावृतानां संक्षेपतश्चिकित्सितमौषधमुक्तम् । तत्प्राणादीनां पञ्चानामावृतानाञ्चिकित्सितम् । तत्पूर्व्वोक्तं वितर्क्य भिषक् स्वयमेव विचार्य्य कुर्य्यात् ॥ ६०—६१ ॥

उदानमिति । उदानाख्यं वायुमूर्द्ध्वमेव योजयेत् । यतोऽसौ सदैवोर्द्ध्वगामी तथा प्रयतेत यथोर्द्ध्वगामी भवति । अपानाख्यञ्चानिलमनुलोमयेदधोगतिश्चायं सदैव समीरस्तस्मादधोगमनं यथा यस्य सम्पद्येत तथा चिकित्सितं कार्य्यमित्यर्थः । समानाख्यं वायुं विद्वान् वैद्यो वातघ्नैरौषधैः शमयेत् । अयमभिप्रायो ग्रन्थकृतः । किल नास्योर्द्ध्वगामिता नैवाधोगामिता यथा सम्पद्यते तथा चिकित्सितं हितम् । किं तर्हि स्वस्थानप्रतिपत्तिरित्येवं चिकित्सा कार्य्येति । व्यानाख्यन्तु वायुं त्रिधा योजयेदूर्द्ध्वाधोमध्यगमनं यथाऽस्य शरीरे सम्पद्यते तथा चिकित्सा कार्य्येति । तथा प्राणो वायुश्चतुर्भ्योऽप्युदानापानसमानव्यानेभ्योऽपि सर्व्वप्रयत्नेन रक्ष्यः । यथोदानादिभिर्नास्य बाधा सम्पद्यते तथा चिकित्सा कार्य्येत्यर्थः । यतस्तस्य प्राणस्य स्थितौ सत्यां देहस्य शरीरस्य स्थितिर्जीवनं भवति प्राणं विना न जीवतीत्यर्थः । एवमनेन प्रकारेण वातान् विमार्गगानावृतान् स्वं स्वं स्थानं नयेत् ॥ ६२ ॥

सर्व्वञ्चावरणं पित्तरक्तसंसर्गवर्जितम्।
रसायनविधानेन लशुनो हन्ति शीलितः॥ ६३॥
पित्तावृते पित्तहरं मरुतश्चानुलोमनम्॥ ६४॥
रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम्।
रक्तपित्तानिलहरं विविधञ्च रसायनम्॥ ६५॥
यथानिदानं निर्द्दिष्टमिति सम्यक् चिकित्सितम्।
आयुर्वेदफलं स्थानमेतत्सद्योऽर्त्तिनाशनम्॥ ६६॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम्।
भेषजं शमनं शस्तं पर्य्यायैः स्मृतमौषधम्॥ ६७॥

इति चिकित्सितस्थाने वातशोणितं नाम द्वाविंशोऽध्यायः॥ २२॥

इति श्रीसिंहगुप्तसूनु-वाग्भट-विरचितायामष्टाङ्ग-
हृदयसंहितायां चतुर्थं चिकित्सितस्थानं समाप्तम् ॥ ४॥

---

सर्व्वमिति। सर्व्वमेवावरणं वातानां पित्तरक्तसंसर्गवर्ज्जितं रसायनविधिना शीलितो लशुनो हन्ति। एतेन पित्तरक्तसंसृष्टमावरणं वर्ज्जयित्वा सर्व्वावरणान्यन्यानि लशुनः केवल एव निहन्ति। पित्तावृतइति। पित्तावृत उदानादौ पित्तहरं पवनस्य चानुलोमनं हितम्। रक्तावृतइति। रक्तावृते तद्वत् पित्तहरं तथैव !मारुतानुलोमनं हितम्। यच्च खुड़ोक्तं वातशोणितोक्तं भेषजं तथा पित्तरक्तानिलहरञ्च हितम्। विविधं रसायनञ्च। विविधं नानाप्रकारं सर्व्वदोषदूष्यादिकञ्चालोक्य यथायोगं विधेयम्॥ ६३—६५॥

यथेति। इत्यनेन प्रकारेण यथानिदानं निदानानतिक्रमेण यथोद्देशस्तथा निर्देशः। अनया रीत्या सर्व्वमेव चिकित्सितं निर्दिष्टमेतच्चायुर्व्वेदफलभूतं स्थानमेतदुपदेशेन सद्योऽर्त्तिनाशनाद्धेतोः। चिकित्सितमिति। चिकित्सितादय औषधस्य पर्य्यायाः स्मृता इति॥ ६६—६७॥

इति श्रीमृगाङ्कदत्तपुत्र-श्रीमदरुणदत्त-विरचितायामष्टाङ्गहृदयटीकायां
सर्व्वाङ्गसुन्दराख्यायां चिकित्सितस्थाने वातशोणित-
चिकित्सिताख्यो द्वाविंशोऽध्यायः॥ २२।

---